# शास्त्रमुक्तावली.

THE

# SASTHRAMUKTHAVALI.

A COLLECTION OF VEDANTA MIMAMSA AND NYAYA WORKS)

EDITED BY

**P. B. ANANTHA CHARIAR**



PRINTED AT THE

SRI SUDARSANA PRESS

CONJEEVERAM.

८२

श्रीकाञ्ची प्रतिवादिभयङ्करं अनन्ताचार्येण परिशोधिता,

श्रीसुदर्शनमुद्राक्षरशालायां

सम्मुद्यते ।

॥ श्रीकाञ्ची ॥



। वार्षिकमूल्यम् , रू. ५—६—०.

तज्जनकाज्ञाननाशकतारूपत्वस्यावश्यकत्वात् । नच मिथ्यात्वघटकाभावस्य पारमार्थिकत्वपक्षे तादृशाभावस्य केवलान्वयित्वेपि व्यावहारिकाभावस्या तथात्वेनानातिप्रसङ्गात् कार्यजनकत्वं सम्भवति, व्यावहारिकाभावस्य मिथ्यात्वघटकत्वेपि लोकसिद्धविशेषणतानागन्यतमत्वेन कारणतावच्छेदक सम्बन्धत्वाङ्गीकारान्नातिप्रसङ्ग इति कारणीभूताभावप्रतियोगितारूपमेव प्रति बन्धकत्वं बाधशरीरे निवेशयितुं शक्यत इति वाच्यम् ;– तथासति पर्वतो वह्निमान् धूमादित्यादौ प्रातिभासिकवह्न्यभाववत्पर्वतस्यापि बाध-त्वापत्तेः, तज्ज्ञानस्यापि निरुक्तप्रतिबन्धकत्वाक्रान्तत्वात् । तज्जनकाज्ञान नाशकत्वनिवेशे तु नातिप्रसङ्गः, प्रातिभासिकस्याज्ञानाविषयत्वात् । यद्रूपावच्छिन्नविषयिता अनुमितिप्रतिबन्धकतावच्छेदिका स्वसमानसत्ताक तद्रूपवत्त्वस्य विवक्षणेन प्रातिभासिकवह्न्यभाववत्पर्वतस्य वारणे तु साध्या-भाववदसतो बाधत्वकथनमयुक्तमेव; असति कस्या अपि सत्ताया अभावात्। एतेन चिद्भिन्नत्वानुपादाने ब्रह्मणि बाधोपि निरस्तः, मिथ्यात्वाभावस्य व्याव हारिकत्व तस्य ब्रह्मसमसत्ताकत्वाभावात् , शुद्धस्य ज्ञानाविषयत्वपक्षे बाधलक्षणस्यैवासम्भवाच्च । शुद्धस्य निर्विकल्पकधीविषयतापक्षेपि साध्या भावप्रकारकज्ञानाविषयत्वेन बाधलक्षणासम्भवस्तदवस्थः । अस्तु वा यथा कथञ्चिद्बाधः, तथापि सत्तादात्म्यवत्त्वं व्यर्थमेव, स्वसमानसत्ताकचिद्भेद वत्त्वरूपचिद्भिन्नत्वाभावादेव तद्वारणात ; ब्रह्मतादात्म्यरूपस्य भवदभिमत सत्तादात्म्यस्य सत्यत्ववादिमते प्रपञ्चे अस्वीकारेण तादृशविशेषणोपा-दानस्य सन्दिग्धासिद्धिसम्पादकत्वाच्च । किञ्च प्रातीतिकव्यावृत्तरूपेण पक्षतावच्छेदककोटौ सत्तादात्म्यप्रवेशेनैव प्रातीतिकसत्तादात्म्यवतः प्राति भासिकस्य व्यावर्तनाद्ब्रह्मप्रमेत्यादिविशेषणवैयर्थ्यम् , भवन्मते सत्ता दात्म्यत्वरजतत्वघटत्वपटत्वादिकं हि त्रिविधम्– प्रातिभासिकमात्रवृत्ति व्याव हारिकमात्रवृत्ति तदुभयसाधारणञ्चेति, एवञ्चोभयसाधारणसत्तादात्म्यत्वेन

सत्तादात्म्यं निवेश्य प्रातिभासिके सिद्धसाधनसम्पादनस्य तद्वारकविशेषणान्तरोपादानस्य च "प्रक्षाळनाद्धी" ति न्यायग्रस्तत्वात् । किञ्चोभयसाधारणसत्तादात्म्यत्वेन सत्तादात्म्यस्य पक्षतावच्छेदकघटकत्वे न तुच्छव्यावृत्तिः, शशविषाणं सदिति भ्रमसम्भवेन शशविषाणादावपि प्रातीतिकस्य सत्तादात्म्यस्य सम्भवात् । नच शशविषाणादौ न प्रातीतिकसत्तादात्म्यसम्भवः, अनुयोगिरूपेण परिणममानाविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परिणममानत्वनियमेनाळीकरूपेणाविद्याया अपरिणममानत्वादळीकनिष्ठतादात्म्यरूपेणाविद्यायाः परिणामाऽसम्भवात् ; शुक्तिरूप्यादिरूपेण परिणममानाविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परिणममानत्वादुक्तनियमस्यानपवादत्वादिति वाच्यम् ;– रजतं सदित्यादौ व्यावहारिकस्य शुक्त्यादिनिष्ठसत्तादात्म्यस्यैव रजतसंसर्गत्वोपपत्तौ तत्र सत्तादात्म्यपरिणामे मानाभावात । नच तस्य रजतानुयोगिकत्वाभावान्न रजतसंसर्गत्वसम्भव इति रजतानुयोगिकतादात्म्यपरिणामस्यावश्यकतेति वाच्यम् ; तादात्म्यानुयोगित्वयोर्विशृङ्खलयोः परिणामेपि रजतानुयोगिकतादात्म्यनिर्वाहात् ; अनुयोगित्वस्य, रजतसत्तादात्म्याभ्यां तत्सम्बन्धयोः तयोरपि विशृङ्खलयोर्विशिष्टमाननिर्वाहकत्वेन तत्सम्बन्धानामपीत्येवमनवस्थितानन्तपरिणामकल्पनापत्तेः; तावत्सम्बन्धानाञ्च रजतं सदित्यादिज्ञाने भानस्यानुभवविरुद्धत्वात् ; तदपेक्षयाऽनुयोगित्वमात्रस्य परिणामौचित्यात्; सम्बन्धसम्बन्धस्याऽभाने तत्परिणामस्याप्यनावश्यकत्वात् । एवं सत्प्रतियोगिकतादात्म्यस्योक्तनियमस्वीकारेणाळीकावृत्तित्वेपि सदनुयोगिकाळीकप्रतियोगिकतादात्म्यस्याळीकसाधारण्ये क्षतिविरहात् ; सद्रूपेण परिणममानाऽविद्याविरहेण तादृशतादात्म्यस्यानुयोगिपरिणाम्यविद्याकार्यत्वाभावात् ।

यदपि सदनुयोगिकतादात्म्यस्योक्तरीत्या असत्साधारण्येपि न क्षतिः, सत्प्रतियोगिकतादात्म्यस्यैव पक्षतावच्छेदकघटकत्वादिति; तदपि न,

तथासति अनुयोगितासम्बन्धेन सत्प्रतियोगिकतादात्म्यस्य पक्षतावच्छेदक-घटकत्वेनैव ब्रह्मणि बाधवारणे सिद्धिन्नत्वविशेषणवैयर्थ्यात्, स्वस्मिन् स्वप्रतियोगिकतादात्म्यानुयोगित्वाभावात्; - प्रतियोगितानुयोगितान्यतरसम्बन्धेन तादृशतादात्म्यस्य घटकतां स्वीकृत्य ब्रह्मणि बाधसम्पादनस्य "प्रक्षाळनाद्धी" ति न्यायग्रस्तत्वात् । सत्प्रतियोगिकतादात्म्यनिवेशे आश्रया सिद्धिश्च, इदम्पदार्थे रजतस्येव ब्रह्मणि दृश्यमात्रस्य तादात्म्येनाऽध्यस्त तया इदम्पदार्थे रजतप्रतियोगिकतादात्म्यस्येवं ब्रह्मणि दृश्यप्रतियोगिक तादात्म्यस्योत्पत्तिसम्भवेपि घटादिदृश्ये सद्रूपब्रह्मणोऽनध्यासात्तत्र सत्प्रति योगिकतादात्म्यस्वीकारे प्रमाणाभावात् ।

यत्तु— इदं रजतं रजतमिदमिति ज्ञानद्वयस्य परस्परवैलक्षण्य निर्वाहाय प्रथमप्रतीतेरिदम्पदार्थे रजततादात्म्यावगाहित्वं द्वितीय प्रतीतेः रजते इदन्तादात्म्यावगाहित्वं स्वीकर्तव्यम्, तथा घटस्सन्, सन् घट इति प्रतीतिद्वयानुरोधेन सति घटादितादात्म्यमिव घटादौ सत्ता दात्म्यमपि सिद्ध्यतीति;- तन्न; - उपनीतं विशेषणतयैव भासत इति वदद्भिर्नैयायिकादिभिः प्रथमप्रतीतेः स्वीकारेपि द्वितीयप्रतीतेरनङ्गी कारेण तादृशप्रतीतेरप्रामाणिकत्वात्; प्रामाणिकत्वेपि विषयितावैलक्षण्ये नैव ज्ञानवैलक्षण्यनिर्वाहेण तदर्थं विलक्षणविषयकल्पनस्यायुक्तत्वात्; अन्यथा घटवद्भूतलम् घटभूतलसंयोगा इति ज्ञानयोर्वैलक्षण्यनिर्वाहाय तत्रापि विलक्षणविषयकल्पनापत्तेः । नच प्रथमज्ञाने सम्बन्धविधया भासमानस्य संयोगस्य सम्बन्धोऽप्यधिको भासते, नतु समूहालम्बन रूपचरमज्ञान इति विषयवैलक्षण्यादेवोभयोर्वैलक्षण्यमिति वाच्यम्;— संयोगादिप्रतियोगिकसम्बन्धमादायापि समूहालम्बनसम्भवात् । नच संयोगसंसर्गकविशिष्टबुद्धौ संयोगः स्वरूपत एव भासते, नतु संयो गत्वेन; सखण्डपदार्थस्यापि सम्बन्धविधया स्वरूपतो भानोपगमात्;

उक्तसमूहालम्बने च 'संयोगत्वेन संयोगो भासत इति संयोगत्व रूपाधिकपदार्थभानाऽभानाभ्यामेव तयोर्विशेष इति वाच्यम्; एवमपि घटवद्भूतलं संयोगश्च, घटभूतलसंयोगा इति ज्ञानयोर्विशेषानिर्वाहात् । नच घटवद्भूतलमिति ज्ञाने घटविशिष्टभूतलस्य विषयत्वं समूहालम्बने च शुद्धभूतलस्येति विशेषः, विशिष्टस्यातिरिक्तत्वादिति वाच्यम्; विशिष्ट स्यातिरिक्तताया अनुपदमेव निराकरिष्यमाणत्वात् ।

यत्तु — विषयतावैलक्षण्याज्ज्ञानवैलक्षण्योपपादने बहिर्विषयमात्र विलोपापत्त्या साकारवादापत्तिः, अयं घटः अयं पट इति ज्ञानानां मिथो वैलक्षण्याय हि तेषां विषयाः परस्परं भिन्ना घटपटादिरूपा उप गम्यन्ते, तदुक्तमुदयनाचार्यैः - "अर्थेनैव विशेषो हि निराकारतया धिया" मिति ; अर्थेन- ज्ञानादत्यन्तभिन्नेन घटादिरूपेण, अभिन्नो धियां विशेषः, निराकारतया— ज्ञानधर्मरूपाकारेण घटादिना विषयितास्थानी येन हीनतया ; तथाच घटादिकं विषयितास्थानीयं ज्ञानधर्मो ज्ञानाद्भिन्नाभिन्नतया बौद्धैर्यदुच्यते, न तत्तथा, किन्तु ज्ञानादत्यन्त भिन्न एव विषयो ज्ञानवैलक्षण्यसम्पादक इति स्वीकार्यम्; तथाच इदं रजतम् रजतमिदमिति प्रतीत्योर्वैलक्षण्यनिर्वाहाय रजतप्रतियोगिकेद-म्प्रतियोगिकतादात्म्यद्वयमिव प्रकृतेपि घटस्सन् सन् घट इति प्रतीति द्वयवैलक्षण्याय तादात्म्यद्वयमावश्यकमिति । तन्न; विषयितावैलक्षण्यात् ज्ञानवैलक्षण्येपि विषयितावैलक्षण्यस्य विषयवैलक्षण्याधीनतया बहिर्विषय विलोपापत्त्यनवकाशात्; स्वतोव्यावृत्तविषयिताकल्पनस्यैव बौद्धमतप्रवेशा पादकत्वात्, विषयव्यावृत्तविषयिताकल्पनस्याऽतथात्वात्; अन्यथा भवतामपि बौद्धमतप्रवेशापत्तेर्दुर्वारत्वात्; भवद्भिरपि ज्ञानविषययोस्सम्बन्ध भूतस्य विषयित्वस्य स्वीकारात्; तच्च चित्तादात्म्यरूपं ज्ञाना द्भिन्नाभिन्नमिति भवत्सिद्धान्तात्; ज्ञानवैलक्षण्यस्य साक्षाद्विषयवैलक्षण्या

धीनत्वाभावेपि परम्परया तदधीनत्वादेव 'अर्थेनैवे' त्यस्योपपत्तेः ; 'निराकारतये' त्यस्यापि स्वतो व्यावृत्तविषयिताशून्यतयेत्यर्थात् । नच विषयवैलक्षण्याद्विषयितावैलक्षण्यम् , तद्वैलक्षण्याच्च ज्ञानवैलक्षण्यमिति प्रणाळीकल्पनापेक्षया साक्षाद्विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यमिति कल्पन मुचितमिति वाच्यम् ;– यत्र विषयवैलक्षण्याज्ज्ञानवैलक्षण्यं न सम्भवति– यथा पूर्वोक्तयोर्घटवद्भूतलं घटभूतलसंयोगा इति समूहालम्बनविशिष्ट बुद्ध्योः, तत्र विषयितासु विशेष्यितात्वादिकमखण्डं कल्पयित्वा तादृश विषयितावैलक्षण्यादेव ज्ञानवैलक्षण्योपपादनात् ; तत्रापि विलक्षणविषय कल्पने घटपटादिरूपनानापदार्थविषयकसमूहालम्बनविशिष्टबुद्धिभेदेनानन्त-विषयकल्पनापत्तेः; तदपेक्षया विशेष्यितात्वादेरखण्डस्य कल्पने लाघवात् ; अत एव विशेष्ये विशेषणमिति रीत्या जायमानात्तत्क्षणविशिष्टघटवानिति ज्ञानाद्विशिष्टवैशिष्ट्यावगाहिनस्तत्क्षणविशिष्टघटवानितिज्ञानस्य वैलक्षण्यो पपत्तिः, विशिष्टवैशिष्ट्यावगाहिज्ञानीयतत्क्षणनिष्ठविषयतायामवच्छेदकता-त्वरूपाखण्डधर्मस्य कल्पनात् , विशेष्ये विशेषणमितिज्ञानीयतत्क्षणनिष्ठ विषयतायां च तदकल्पनात् । एवमेव एकत्र द्वयमिति रीत्या तत्क्षण घटत्वोभयविशिष्टवैशिष्ट्यावगाहिज्ञानात् घटत्वविशिष्टे तत्क्षणप्रकारकस्य विशिष्टवैशिष्ट्यावगाहिज्ञानस्य वैलक्षण्यनिर्वाहः, तत्र प्रथमज्ञाने उभय निष्ठप्रकारतानिरूपितविशेष्यताया निरवच्छिन्नत्वात् , द्वितीयज्ञाने च क्षण-निष्ठप्रकारतानिरूपितविशेष्यताया घटत्वावच्छिन्नत्वात् ।

यत्तु- विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टस्य विषयत्वात् विशेष्ये विशेषणमिति रीत्या ज्ञाने केवलस्य विषयत्वात् विषयवैलक्षण्यादेव तयो र्विशेषः, विशिष्टकेवलयोर्भेदादिति; तन्न, विशिष्टस्यातिरिक्तत्वे क्षणि-कत्वापत्त्या बौद्धमतप्रवेशापत्तेः, तत्तत्क्षणविशिष्टस्य भिन्नत्वात् । नच केवलस्य स्थिरत्वान्न दोष इति वाच्यम् ; – केवलरूपस्य तत्तत्क्षण

सम्बन्धित्वे भेदापत्तेः, . क्षणासम्बन्धित्वे कालसम्बन्धित्वाभावेन तुच्छत्वापत्तेः । एवं विशिष्टकेवलयोर्भेदे विशिष्टसत्ता न सत्तेति प्रत्ययापत्तिश्च ।

यत्तु — समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञोऽभेदविरोधित्वविशिष्टस्वरूपसंसर्गकभेदप्रकारकशाब्दबोधजनकत्वादसमान - विभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञश्च प्रतियोगिविरोधित्व विशिष्टस्वरूपसंसर्गकाभावबोधजनकत्वाद्विशिष्टसत्ता न सत्तेति न प्रत्ययः, विशिष्टशुद्धयोर्भेदाभेदाङ्गीकारेणाऽभेदविरोधित्वविशिष्टस्वरूपसम्बन्धेन भेदविरहात्; विशिष्टसत्ता न सत्तेति प्रात्यक्षिकप्रत्ययस्यापि नापत्तिः, तादृशप्रत्ययेप्युक्तस्वरूपस्यैव संसर्गत्वात्; अभिलप्यमानप्रतीतेरभिलापजन्यबोधसमानाकारत्वादिति । तन्न, वृक्षे न कपिसंयोग इति प्रत्ययस्य भ्रमत्वापत्तेः, तत्र स्वरूपसम्बन्धे प्रतियोगिविरोधित्वविरहात् । नच तत्राप्येकावच्छेदेनैकाधिकरणावृत्तित्वरूपविरोधोऽस्तीति वाच्यम्;— तथापि 'नेह नानास्ती' ति श्रुतिजन्यबोधस्य भ्रमत्वापत्तेः; भेदाभेदयोः परस्परं विरुद्धत्वेन विशिष्टकेवलयोर्भेदाभेदाङ्गीकारस्यायुक्तत्वाच्च ।

यदपि तद्घटे तद्घटसंयोगादिसत्त्वेपि तद्घटस्तद्घटवानिति धीः न प्रमा, किन्तु भूतलादौ तद्घटादिप्रकारकधीः प्रमेति व्यवस्था सिद्धये विशिष्टधीमात्रे विशेष्ये विशेषणस्य भेदसमानाधिकरणस्सम्बन्धो विषय इति कल्प्यते, तथाच सति हि तद्घटे तस्य संयोगादिसत्त्वेपि तद्भेदसमानाधिकरणसंयोगादिसम्बन्धस्यासत्त्वान्नोक्तधीः प्रमा, तथाच सत्ता विशिष्टसत्तेत्यभेदसंसर्गकप्रत्ययेपि विशेषणभेदसमानाधिकरणाभेदस्यैव संसर्गत्वावश्यकत्वाद्विशिष्टकेवलयोर्भेदाभेदसिद्धिरिति । तन्न; तद्घटभेदवद्वृत्तित्वविशिष्टस्यापि संयोगस्य प्रतियोगितया तद्घटे सत्त्वेन तद्घटस्तद्घटवानिति प्रमापत्तेर्दुर्वारत्वात् । यदिच तादृशसंयोगस्स्वानुयोगिन्येव स्वप्रतियोगिनस्सम्बन्धो नतु स्वप्रतियोगिनीति नियमान्नोक्ता

पत्तिरित्युच्यते तदा भेदस्य संसर्गघटकत्वं व्यर्थम् ; तद्घटसंयोगानुयोगित्वस्य तद्घटे ऽभावादेव तस्य सम्बन्धत्वानुपपत्तेः । एवं विशिष्टकेवलयोर्भेदे केवलघटे तद्व्यक्तित्वविशिष्टघटभेदस्य सत्त्वेन विशेषणभेदस्य संसर्गतावच्छेदकत्वाङ्गीकारेऽपि तद्घटस्तद्घटवानित्यादिबुद्धेः प्रमात्ववारणासम्भवात् , विशेषणनिष्ठप्रतियोगितानिरूपितत्वविशिष्टानुयोगिताया विशिष्टबुद्धिविषयत्वाङ्गीकारेणैव तद्घटस्तद्घटवानितिबुद्धेः प्रमात्वस्यावश्यं वारणीयत्वात् , स्वस्मिन् स्वप्रतियोगिकत्वविशिष्टनिरूपितसम्बन्धानुयोगिताविरहात् , तत्प्रतियोगिकत्वविशिष्टनिरूपितसम्बन्धानुयोगितायास्तदधिकरणतारूपत्वात् ; घटाभावादिस्थले स्वभेदेऽप्याधाराधेयभावाङ्गीकाराद्घटाभावस्तद्वानिति प्रतीतेः प्रमात्वनिर्वाहात् । विशेषणभेदस्य सम्बन्धतावच्छेदकत्वपक्षे च घटाभावो घटाभाववानित्यादिबुद्धेः प्रमात्वानुपपत्तिः, घटाभावे तद्भेदाविरहात् ।

यत्तु- घटाभावो घटाभाववानित्यादौ घटप्रतियोगिकाभावत्वमात्रेण विशेषणत्वे तेनैव रूपेण न विशेष्यत्वम् , किन्तु घटविरोध्यभावत्वादिरूपेण, यथा हि मामहं जानामीत्यादौ रूपभेदेनैव कर्मकर्तृता, अन्यथा अत्यन्ताभेदे परसमवेतक्रियाजन्यफलवत्त्वरूपस्य कर्मत्वस्यात्मन्यसम्भवात् , तथा रूपभेदेनैव विशेष्यत्वविशेषणत्वे उक्तज्ञाने स्वीक्रियेते; उक्तकल्पनानुरोधात् ; घटाभावस्तद्वानित्यादावेकरूपविशिष्टस्यैव घटाभावपदतत्पदाभ्यामुल्लेखेऽपि सुबर्थैकत्वादिविशेषितरूपेणैव शाब्दधीविशेष्यता, तथा च भिन्नरूपाभ्यां घटाभावादौ तद्भेदसम्भवेन भेदविशिष्टविशेषणतासम्बन्धस्य भानाद्विशिष्टधीमात्रे भेदविशिष्टसम्बन्धस्य भाननियमो न व्याहत इति; तन्न, घटाभावत्वाद्येकरूपावच्छिन्नविशेषणविशेष्यताकप्रत्यक्षस्थले भेदभानानुपपत्तिशङ्कायामस्मदभिमतायां भिन्नरूपावच्छिन्नविशेषणविशेष्यभावस्थले समाधानस्यासङ्गतत्वात् , शाब्दबोधे मतुपा सम्बन्धिबोधनेन शङ्काया एवासङ्गतेः तत्र भिन्नरूपोपपादनस्यायुक्तत्वात् । नचैकरूपावच्छिन्नविशेषण

विशेष्यताकं तादृशप्रत्यक्षमेव न सम्भवतीति समाधानतात्पर्यान्नासङ्गतिरिति वाच्यम्;— एतस्य शपथमात्रनिर्णेयत्वात् । किञ्च, घटाभावत्वाद्यवच्छिन्ने तदवच्छिन्नव्याप्यवत्तापरामर्शात्तदवच्छिन्नविधेयताकानुमितिः केन वार्यते ? अनुमितावुपनीतधर्मान्तरभानोपगमेपि तन्नियमासिद्धेः । एवं घटाभावस्तद्वानित्यादौ सुबर्थैकत्वमादाय समाधानमपि न युक्तम्, तथासति घटाभावस्तदभाववानित्यादिभ्रमनिवृत्तये घटाभावस्तद्वानित्यादिवाक्यप्रयोगानुपपत्तेः ; शुद्धतद्धर्मावच्छिन्नधर्मिकतदभाववत्ताज्ञाने शुद्धतद्धर्मावच्छिन्ने तन्निश्चयस्यैव प्रतिबन्धकत्वात्, तस्य तादृशवाक्यादनुत्पत्तेः । एवं घटाभावस्तदभाववानिति वादिनं प्रति घटाभावस्तद्वानिति प्रतिज्ञायामर्थान्तरम् । किञ्च- परसमवेतक्रियाजन्यफलशालित्वशरीरे आत्यन्तिकभेदस्यैव घटकत्वम्, अन्यथा मामहं जानामीतिवन्मामहं गच्छामीत्यापत्तेः । घटाभावस्तद्वानित्यादौ प्रक्रान्तवाचितच्छब्दस्यैकत्वविशिष्टघटाभावपरामर्शकत्वसम्भवेन तादृशघटाभावस्यैव विशेषणत्वाद्विशेषणभेदस्य संसर्गतावच्छेदकत्वासम्भवात् । नच प्रक्रान्तत्वं समभिव्याहृतपदोपस्थाप्यत्वम्, तेन प्रत्ययान्तोपस्थाप्यैकत्वविशिष्टघटाभावस्य न तच्छब्देन परामर्श इति वाच्यम् ; सुन्दरो देवदत्तस्तमानयेत्यादौ सौन्दर्यविशिष्टदेवदत्तस्य तच्छब्देन परामर्शदर्शनेन समभिव्याहृतशब्दजन्यज्ञानविषयत्वस्यैव प्रक्रान्ततारूपत्वात् । एवं सत्ता विशिष्टसत्ता नीलो घट इत्यादौ भेदाभेदयोर्भानमङ्गीकृत्य विशिष्टशुद्धयोर्गुणगुण्यादीनां च भेदाभेदाङ्गीकारे "नैकस्मिन्नसम्भवादि" त्यधिकरणविरोधः, तत्र भावाभावरूपविरुद्धधर्माणामेकत्रासम्भवस्य प्रतिपादनात् ; इत्यलं प्रसक्तानुप्रसक्त्या ।

तस्मात् विशिष्टशुद्धयोर्भेदासम्भवाद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य विशेष्ये विशेषणमिति ज्ञानाद्वैलक्षण्यस्य विषयितावैलक्षण्यादेव वाच्यतया सन् घटः घटस्सन्निति ज्ञानयोरपि विषयितावैलक्षण्यादेव वैलक्षण्यनिर्वाहात्सत्प्रतियोगिकतादात्म्यान्तरे मानाभावादाश्रयासिद्धिर्दुर्वारा ।

विशेषविशिष्टेष्टकारूपसमुदायपरत्वस्यैवाङ्गीकारात् । तस्मात् समुदायस्य साधनत्वे प्रतिपशु संस्कारानुपपत्तेः परस्परवाक्ये यागैक्योक्तिर्मुधैव ।

किञ्चैवं वसन्तवाक्येपि यागैक्यं किमिति नाङ्गीक्रियते, एकादशावदानगणानुपपत्तेः प्रकृतावेकत्वस्यार्थिकत्वेन परिहर्तुं शक्यत्वात् । अथास्तु भवदुक्तयुक्त्यैव परस्परवाक्ये कर्मभेदः, ततो वसन्तवाक्येपि तत एव भेदसिद्धेः किमव्यापकेन स्वरूपतः सिद्धेन चैकादशावदानगणानुपपत्त्युपन्यासेन । तस्मात् सिद्धः प्राजापत्यवाक्ये अन्येष्वप्येवञ्जातीयकेषु कर्मभेदः । अतएवैकपशुसाध्यताप्यतिदेशप्राप्तानुगृहीता भवति । अन्यथा सामदश्येन तद्बाधापत्तेः । अतएव सम्बन्धभेदाङ्गीकारेप्यनेकसम्बन्धोपपादकैकयागकल्पनैव लाघवादस्त्वित्यपि अपास्तम्, सम्बन्धानामुभयथाप्येकानेकयागकल्पनयैवोपपत्तौ लाघवास्यन्यायापेक्षया पश्वेकताप्राप्त्यतिदेशशास्त्रस्यैव नियामकत्वौचित्यात् । अतएवानेकयागकल्पनायां गौरवमपि प्रामाणिकम् । एवं चित्रेष्ट्यादावपि द्रव्यैकताप्राप्तिचोदक एव नियामकः । यत्वत्र मूले अवदानगणैकताप्राप्त्या सिद्धान्तकरणम्, तदतिशयार्थमिति द्रष्टव्यम् । तस्मात् सिद्धो धात्वर्थभेदः । पूर्ववदपूर्वभेदस्तु भाव्यभूतापूर्वभेदं विना भावनाभेदानुपपत्तेः द्रष्टव्यः ।

प्रयोजनं पूर्वपक्षे सम्बन्धैकत्वपक्षे अवदानप्रकृतिभूतपशुगतसमुदायस्य देवतासम्बन्धात् तस्य चैकत्वेन प्रकृतिप्राप्तदेवतासम्बन्धवृत्तिप्रोक्षणापाकरणादिधर्मजातं सकृदेव कार्यम्, दृष्टार्थन्तु नियोजनविशसनादि प्रतिपशु प्रयोजनानुरोधेन कार्यम्, तथैकस्य पशोर्नाशे तद्घटितसमुदायस्य नाशेन तद्वृत्तिसंस्काराणामपि नाशादानीयमानपशुसहितैतत्पशुसमुदायान्तरे पुनरपि संस्कारः कार्यः, तत्पशुविशसनोत्तरमेतत्पशुनाशे तु पश्वन्तराण्युत्पाद्यानि, सम्बन्धभेदपक्षेत्वेकपशुविस्मरणेपि यागस्यैकस्य जातत्वान्न तदर्थं पुनःकरणम्; सिद्धान्ते तु पशूनामेव देवतासम्बन्धात्

गृह्यमाणविशेषत्वेन प्रतिपशु प्रोक्षणादि, एकपशुनाशे च तत्रैव संस्कार करणम् , विशसनोत्तरमप्येकस्यैवोत्पत्तिः, विस्मरणे पुनर्यागकरणमिति ध्येयम् । सूत्रं स्पष्टम् ।

इति संख्याधिकरणम् ॥७॥

## अथ संज्ञाधिकरणम् ॥

संज्ञाचोत्पत्तिसंयोगात् ॥ २—२—२१॥

ज्योतिष्टोमं प्रकृत्य श्रूयते — " अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत, एतेन ऋद्धिकामो यजेते " ति, तथा " अथैष गौरथैष आयु " रित्यादि च । तत्र किं ज्योतिष्टोमात् कर्मान्तराण्येवंसंज्ञकानि विधीयन्ते, उत तस्यैवैताः संज्ञा इति विचारः । पादाध्यायसङ्गती स्पष्टे । अनन्तरा तु सङ्ख्यावत् संज्ञायाः स्वसमानाधिकरणस्वाश्रय प्रतियोगिकभेदव्याप्यत्वरूपपृथक्त्वनिवेशित्वाभावान्न भेदकतेति पूर्वपक्षो त्थानात् प्रत्युदाहरणरूपा ।

तत्र " अथैष ज्योति " रित्यादीनि तावद्विभज्यमानसाकांक्षत्वा भावात् त्रीणि वाक्यानि, " एतेने " त्यप्यनुषङ्गे प्रमाणाभावात् ' तस्मिन् सीदे ' तिवच्चतुर्थमित्यप्यविवादम् । तत्र " अथैष ज्योति " रित्यादि वाक्येषु प्रथमान्तत्वादस्तीत्येतदध्याह्रियते । तेन च भेदकप्रमाणा भावात् प्रकृत एव यागोनूद्यते । तथाहि— न तावदत्र शब्दान्तर मस्ति, तस्य भावनामात्रभेदकत्वेनाभिधातोश्च भावनानवच्छेदकत्वेना भावात् । सिद्धे हि यागान्तरे तस्याप्राप्तत्वात् विधिः भावना वा कल्प्येत, नच तत्सिद्धिः शब्दान्तरन्यायप्रमाणिका । अत एव विधि पुनःश्रवणाभावान्नाभ्यासोऽपि । सहस्रदक्षिणादिवाक्ये तत्सत्त्वेपि चा

न्वयपरत्वाभावात् नाभ्यासता; ऋध्यादिवाक्ये ऋध्याख्यफलसम्बन्धपर त्वस्यापि स्वर्गवदुपपत्तेः । नच गुणः, ज्योतिरादिशब्दानां नाम त्वस्य साधितत्वात्, गवादिशब्दानामपि दक्षिणात्वेन फलत्वेन च गवादीनां प्राप्तत्वात् तत्प्रख्यन्यायेनैव ज्योतिष्टोमनामत्वात् । नच गोत्तरत्वेन प्राप्तावपि हविष्ट्वेन विधानोपपत्तेः प्रकृते च कर्मण्युत्पत्तिशिष्टसोमावरोधान्निवेशानुपपत्तेः भेदावश्यम्भाव इति वाच्यम्; गुण वाचिपदस्य नामधेयत्वेनाप्युपपत्तौ अपूर्वान्तरकल्पनानुबन्धिकर्मान्तरकल्प कत्वे प्रमाणाभावात् । नच वाजिनवत् कर्मणि प्रवृत्तिनिमित्ताभावः, गोसम्बन्धस्य प्राप्तत्वेन समिदादिवल्लक्षणया नामत्वोपपत्तेः । अतो न तावत् ज्योतिरादिपदवाच्यगुणस्य भेदकत्वम् । नापि सहस्रदक्षिणादेः, तस्योत्पत्तिशिष्टगुणावरोधितत्वात् भेदकत्वानुपपत्तेः । नापि प्रकरणान्तरम्, अनुपादेयगुणाभावात् । ऋद्धिवाक्ये तत्सत्त्वेपि प्रकरणात् पूर्वपरामर्शे तच्छब्दयोगाच्च उपस्थितिसत्त्वेनासान्निध्याभावाच्च । नन्वधिकारार्थाथ शब्दश्रुत्या कर्मान्तरविषयाधिकारावगमात् पूर्वकर्मप्रत्यभिज्ञाबाधेन प्रकरणस्य व्यापारासम्भवात्, एतच्छब्दस्य च जघन्यत्वेन दुर्बलत्वा त्तदुपमर्दकत्वानुपपत्तेः, वस्तुतः तदादिसर्वनाम्नां पूर्वप्रकृतपरामर्शित्वेपि एतच्छब्दस्योभयसाधारण्येन सन्निहितप्रत्यक्ष एव प्रयोगानुसारेण शक्त्य वधारणात्, अथशब्दानुरोधेन वक्ष्यमाणपरामर्शित्वस्याप्युपपत्तेरसान्निधि सत्त्वेन तत्सहकृतफलरूपानुपादेयगुणस्य प्रकरणान्तरन्यायेन भेदकत्वोपपत्तिः, नचात्राथशब्दस्यानन्तर्यार्थकत्वं शक्यते शङ्कितुम्, तव मते आनन्तर्य प्रतियोगिनः कर्मान्तरस्यासत्त्वेन तदर्थकत्वानुपपत्तेः; काम्यानां कर्मणां भिन्नप्रयोगविधिपरिग्रहेण क्रमासम्भवाच्च, उत्तरकालतामात्रस्य च प्राप्तत्वे नाथशब्दवैयर्थ्यापत्तेश्च; अत एव पूर्वप्रकृतापेक्षत्वपरत्वस्यानुपपत्तिः, तद्धि संहत्य फलसाधनत्वाद्वा स्यादङ्गाङ्गिभावाद्वा? अतिदेशसिद्ध्यर्थं वा?

नाद्यौ, नैरपेक्ष्येण फलसाधनत्वात् ; नान्त्यः, अथशब्दं विनापि तत्सिद्धेः; अतएव पूर्वं प्रकृतकर्मापेक्षित्वपरत्वानङ्गीकारेपि अनुवादार्थे पूर्वप्रकृतज्योतिष्टोमविध्यपेक्षित्वपरत्वं भविष्यतीत्यपास्तम्, तदभावेपि "दध्ना जुहोती" तिवत् तत्सिद्धेः ; अतः परिशेषात् "अथशब्दानुशासन" मिति वदधिकारार्थत्वावगमादुक्तमेव प्रकरणान्तरन्यायेन कर्मान्तरत्वमिति चेन्न;— ज्योतिरादिसंज्ञकज्योतिष्टोमप्रयोगविशेषाधिकारार्थत्वेनापि अथशब्दस्य सार्थक्येन प्रत्यभिज्ञाविच्छेदानुपपत्तेः । तथाहि— ज्योतिरादिसंज्ञास्तावदेताः ज्योतिष्टोमस्यैव, प्रकरणात्, तत्रैव वक्ष्यमाणरीत्या प्रवृत्तिनिमित्तसत्त्वाच्च । तथाचैतासां ज्योतिष्टोमसंज्ञया विकल्पेन सङ्कल्पादावुल्लेखः; अतश्च ज्योतिरादिसंज्ञोल्लेखयुक्तयागप्रयोगाधिकारार्थः अथशब्दः । तत्प्रयोजनं च ज्योतिष्टोमसंज्ञोल्लेखयुक्तयागप्रयोगप्रत्यभिज्ञानोच्छेदात् तत्र सहस्रदक्षिणादिव्यावृत्तिः । एतदभावे हि सर्वप्रयोगेष्वेव तत् प्राप्नुयात्, सति त्वस्मिन् पूर्वाधिकृतानामेव प्रयोगविशेषाणामेतेनेत्यनेन परामर्शात् सहस्रदक्षिणादिकमपि तत्रैवेति सिद्ध्यति । अत एव सहस्रस्य द्वादशशतेनाष्टदोषदुष्टो विकल्पः कर्मैकत्वपक्षे प्रसज्यते, 'सहस्रदक्षिणेन यजेते ति — एतावतैवार्थसिद्धेः वाक्यान्तराण्येतद्वाक्यगतश्चैतच्छब्दोऽनर्थकः स्यादित्यपास्तम्, तस्मादथशब्दस्य प्रयोगविशेषप्रत्यभिज्ञोच्छेदकत्वेपि कर्मप्रत्यभिज्ञोच्छेदकत्वाभावान्न प्रकरणान्तरन्यायेन कर्मान्तरत्वम् । अतएवानुपादेयगुणाभावेप्यथशब्दमात्रेणैवास्तु भेद इत्यपास्तम् । नचालमनङ्गीकृतभेदकप्रमाणोपन्यासेन, संज्ञयैव त्वत्र भेदोपपत्तेः कथं कर्मैक्यमिति वाच्यम्, संज्ञा हि संख्यावत् पृथक्त्वनिवेशित्वस्वाभाव्याद्वा भेदिका, गुणवत् पूर्वकर्मण्यनिविशमानत्वाद्वा ? नाद्यः, संज्ञायास्तस्या पूर्वकर्मवाचित्वानभ्युपगमेन शक्तासम्बन्धेनापि पूर्वकर्मवृत्तित्वाभावाद्व्यासज्यवृत्तित्वाभावाच्च स्वसमानाधिकरणस्वाश्रयप्रतियोगिकभेद

ज्ञाप्यत्वरूपपृथक्त्वनिवेशित्वासम्भवात् । नच तथाविधपृथक्त्वनिवेशित्वासम्भवेपि द्वयोस्संज्ञयोः परम्पराश्रयनिष्ठवृत्तित्वव्याप्तिरूपस्य तस्य सम्भवः, घटकलशादिपर्यायेषु द्वयोस्संज्ञयोरेकाश्रयत्वस्यापि दर्शनात् । नान्त्यः, तथात्वे गुण एवान्तर्भावप्रसङ्गात् । किञ्च निमित्तनानात्वमपि किमनेकशक्तिकल्पनप्रसङ्गाभिया, उत वैयर्थ्यप्रसङ्गेन? नाद्यः, अनेकशक्तिकल्पनस्य कर्मान्तरत्वपक्षेपि तुल्यत्वात् ; प्रत्युत मम शब्दभेदात्तदाश्रितशक्तिभेदस्यावश्यकत्वात् तद्विषयैक्यकल्पने लाघवम् । अन्यच्च कर्मान्तरापूर्वान्तरभावनान्तरतद्वाचकविधिवाचकपदकल्पनाभावाल्लाघवम् । ज्योतिरादिवाक्ये हि प्रकृतं ज्योतिष्टोममेतच्छब्देनानूद्य विद्वद्वाक्यवत् सहस्रदक्षिणादिव्यवस्थाफलकज्योतिरादिसंज्ञामात्रं क्रियत इति न विधिभावनावाचकपदापेक्षा । वस्तुतस्तु ज्योतिष्टोमपदेपि ज्योतींषि स्तोमा यस्मिन् इत्यन्यपदार्थस्य यागस्य लक्ष्यत्वात् सर्वज्योतिर्विश्वज्योतिःपदयोरपि तथैव यागस्य लक्षणीयत्वात् ज्योतिःपदेपि च भामा सत्यभामेतिवत स्वार्थवाचकपदघटितपदगम्यत्वसम्बन्धेन "वसन्ते वसन्ते ज्योतिषा यजेत" ति वद्यागस्य लक्षणीयत्वावगतेः । अन्यथा तत्रापि कर्मान्तरत्वापत्तेः दुर्निवारत्वात् । आयुर्गोपदयोरपि च स्वशक्यसम्बन्धेन लक्षणावगतेर्न क्वापि शक्तिकल्पनाप्रसङ्गः । तवैव परमुक्तशक्यसम्बन्धानां यागकल्पनातः पूर्वमप्रसिद्धत्वात् शक्तिकल्पनेति गौरवम् । नान्त्यः, सहस्रदक्षिणादिव्यवस्थाफलकत्वेन सार्थक्यस्योक्तत्वात् । किञ्च तव मते संज्ञात्वसिद्धावेव प्रमाणाभावः । न तावत् उद्भिन्न्यायः, रूढत्वेन तुल्यवद्वृत्तिकत्वाभावात् । नापि वाक्यभेदः, गुणान्तरानुपादानात् । तत्प्रख्यन्यायस्तु कर्मान्तरसिद्ध्युत्तरकालं सम्भवन्नपि ततः पूर्वमनुपस्थितेर्न नामधेयत्वबोधक इति कथं तद्बोधात् कर्मान्तरत्वबोधः । नच कर्मान्तरे प्रवृत्तिनिमित्तमस्ति, उक्तप्रवृत्तिनिमित्तस्य ज्योति

ष्टोमैकविषयत्वात् ।° अतो धर्मिग्राहकप्रमाणेन सिद्धस्य संज्ञात्वस्य ज्योतिष्टोमविषयत्वावधारणान्न संज्ञयापि भेदसिद्धिः । तेन सिद्धं भेदकप्रमाणाभावान्न कर्मान्तरम् ।

इति प्राप्तेऽभिधीयते— भेदकान्तराभावेपि संज्ञाया एव भेदकत्वात् कर्मान्तरत्वसिद्धिः । तथाहि— संज्ञात्वमेव तावदेवं सिद्ध्यति, ज्योतिरादि शब्दास्तावन्न ज्योतिष्टोमे गुणविधयः, उत्पत्तिशिष्टसोमावरोधेन तत्र गुणविधानासम्भवात् ; अतः कर्मान्तरत्वापेक्षया लघुभूतं संज्ञात्वं तावत् प्रथमतोऽवधार्यते । तच्च यद्यपि प्रकृतत्वात् प्रवृत्तिनिमित्तावगमाच्च ज्योतिष्टोमविषयकत्वेनैवावधारितम् , तथापि वक्ष्यमाणरीत्या तद्विषयकत्व बाधेपि न संज्ञात्वस्यापि बाधः । नहि ज्योतिष्टोमविषयकत्वाभावव्याप्तः संज्ञा त्वाभावः, अन्यविषयिण्या अपि संज्ञायाः सम्भवात् ; अतश्चान्यविषयत्वा सम्भवनिश्चयाभावदशायां संज्ञात्वं पूर्वं प्रमितं बाधकाभावेनावतिष्ठमानं पूर्वविषयासम्भवाद्विषयान्तरं स्वसङ्गतये कल्पयतीति युक्तः संज्ञाप्रमाणको भेदः । नच कर्मान्तरे प्रवृत्तिनिमित्तानवगम एवान्यविषयत्वासम्भवनिश्चाय कस्सन् भवति बाधकः, अग्निहोत्रवत् पूर्वं प्रवृत्तिनिमित्तानवगमेपि वक्ष्य- माणरीत्या कर्मान्तरबोधोत्तरकालमवगमसम्भवात् । अतएव उत्पत्तिवाक्ये इष्टसामान्यस्येव पूर्वं सामान्यतः किञ्चिदस्य प्रवृत्तिनिमित्तं भविष्यतीति अवधार्य संज्ञात्वे निर्णीते ततो भेदावधारणोत्तरं तद्विशेषनिश्चये नैव बाधकं पश्यामः । नचावधारितेपि कर्मान्तरे ज्योतिरादिपदानां तत्र गुणविधि त्वोपपत्तेः संज्ञात्वे प्रमाणाभावः. अतश्च कर्मान्तरत्वावधारणात् पूर्वं निश्चितमपि संज्ञात्वं उत्तरकालं गुणविधित्वोपपत्त्या बाध्यताम् , अतश्च वाजिनवत् परं गुणादेव कर्मभेद इत्यवधार्यतामिति वाच्यम्; विशिष्टविधि गौरवभिया गुणविधित्वाभावनिश्चयेन संज्ञात्वे बाधकाभावात् । एवं सत्यपि यदि सोमवाजिनवदत्र प्रवृत्तिनिमित्ताभावोऽवधार्येत, ततो विशिष्टविधि

गौरवापादकमपि गुणविधित्वमेव निश्चित्य संज्ञात्वं बाध्येत, नतु तदस्ति, अतो यत्र संज्ञात्वं पूर्वं प्रमितमुत्तरकालमपि च न बाध्यते तत्र संज्ञया भेदः, अन्यत्र तु गुणादिति विवेकः । किं पुनरत्र प्रवृत्तिनिमित्तम् ? तदुच्यते, ज्योतिश्शब्दादीनां तावत् द्योततेः "द्युतेरिसिन्नादेश्च जः" इत्यौणादिके इसिन्प्रत्यये कृते आदिभूतस्य दकारस्य जादेशाज्ज्योतिश्शब्दव्युत्पत्त्यवगतेः स्वफलसाधनतया द्योतनरूपमुख्यार्थयोगेनैव ज्योतिश्शब्दप्रवृत्तिः, समस्तफलसाधनत्वाच्च इतरयोरपि द्रष्टव्या । यद्यपिचेदं प्रवृत्तिनिमित्तमतिप्रसक्तम्, तथापि कर्मान्तरे रूढिकल्पनया प्राचीनप्रयोगस्य सहकारिकारणत्वकल्पनया वा नातिप्रसङ्गः । गवादिशब्दानां त्वतिदेशप्राप्तगोसम्बन्धेन वाक्यान्तरप्राप्तायुःफलसम्बन्धेन च लाक्षणिकत्वात् प्रवृत्तिनिमित्तोपपत्तिः । ज्योतिरादिपदेष्वपि वातिदेशेन ज्योतिःपदगम्यत्रिवृदादिसमस्तस्तोमसम्बन्धात् लाक्षणिकत्वोपपत्तिः । अतः कर्मान्तरेपि प्रवृत्तिनिमित्तस्य सत्त्वात् संज्ञात्वनिश्चयोपपत्तेः युक्तं तत्प्रमाणकं कर्मान्तरत्वम् । नच संज्ञात्वसिद्धावपि तस्य उक्तविधया ज्योतिष्टोमविषयत्वस्यैवोपपत्तौ विषयान्तरकल्पकत्वानुपपत्तिः, प्रकृतसोमयागस्य ज्योतिष्टोमसंज्ञावरुद्धत्वेन संज्ञान्तरविषयत्वानुपपत्तेः । तथाहि— संज्ञाकार्यस्य व्यवहारस्यैकेनैवोपपत्तौ संज्ञान्तरस्य तावद्वैयर्थ्यमेव । नच विनिगमनाविरहाद्वैकल्पिकी व्रीहियवादिवद्व्यवहारहेतुता, अथशब्देन सोमयागाधिकारविच्छेदार्थकेन विनिगन्तुं शक्यत्वात् । सोमयागाधिकारवर्तिनी हि संज्ञा तद्विषयिणीति शीघ्रं निश्चीयते, न विच्छिन्नाधिकारिकेति कथं विनिगमनाविरहः । नचाथशब्देन पूर्वसंज्ञावच्छिन्नप्रयोगस्यैवाधिकारविच्छेदात् तदनुरोधेन चैतच्छब्दस्य संज्ञान्तरयुक्तप्रयोगपरामर्शित्वावगतेः तत्र सहस्रदक्षिणादिव्यवस्थार्थत्वेन संज्ञान्तरसार्थक्यमिति वाच्यम्; कर्मण एव प्रधानत्वेन पुरस्स्फूर्तिकस्याथशब्देनाधिकारविच्छेदात्, सर्वनाम्नामुपस्थितार्थमात्रपरत्वेनैतच्छब्दस्य ज्योतिरादिपदवाच्यकर्ममात्रपरामर्शित्वावगतेः,

अव्युत्पत्तिसिद्धसंज्ञायुक्तकर्मप्रयोगपरामर्शित्वाङ्गीकारस्यायुक्तत्वाच्च । नहि घटोऽस्ति एनमानयेत्यादौ घटपदयुक्तस्य सर्वनाम्ना परामर्शः क्वचित् दृष्टः। अतः सहस्रदक्षिणादिव्यवस्थाफलकत्वासम्भवात् कर्माधिकारविच्छेदार्थकेनाथशब्देन पूर्वसंज्ञातो ज्योतिरादिसंज्ञानां विलम्बितत्वावधारणान्न व्रीहियवादिवद्विकल्पोपपत्तिः । अतएव यत्र न किञ्चिन्नियामकं लभ्यते तत्र विकल्पो ऽङ्गीक्रियत एव । यथा- "वैश्वानरो ज्योतिष्टोमः प्रायणीय महर्भवति" इत्यत्र वैश्वानरप्रायणीयपदयोः । अत्रहि वैश्वानरदेवत्यग्रहणाम्नानाद्यागेऽपि प्रसङ्गेन तद्देवताजन्योपकारलाभाद्वैश्वानरपदवाच्यत्वोपपत्तेः वैश्वानरपदं तत्प्रख्यन्यायेन नामधेयम् । प्रायणीयपदमपि प्राथम्यगुण योगेन । एतयोश्च विनिगमनाविरहेण द्वयोरप्येकस्मिन्नेव कर्मणि निवेशावगमादेकसंज्ञावरुद्धे संज्ञान्तरस्य वैयर्थ्यमित्येवंविधस्य च संज्ञाभेद कत्वन्यायस्याभावेन कर्मान्तरबोधकत्वासम्भवात् अगत्या व्रीह्यादिवत् सङ्कल्पादावेकस्योल्लेख इत्येवंविधो विकल्प एव । ज्योतिष्टोमपदन्तु ज्योतिष्टोमविध्यन्तप्रतिप्रसवार्थं तन्नामातिदेशकम् । एतदभावे हि गणत्वसामान्या द्वादशाहविध्यन्त एव प्राप्नुयात्, न ज्योतिष्टोमविध्यन्त इति विरोधे तस्यैव प्राप्त्यर्थं ज्योतिष्टोमपदम् । तेन यत्र पूर्वस्मिन् कर्मण्येकसंज्ञा वरुद्धेऽपि संज्ञान्तरस्य कार्यान्तरकल्पनया सार्थक्यम्, यत्रवा विनिगमनाविरहेण द्वयोरपि विकल्पः तत्र संज्ञायाः कर्मभेदकत्वाभावेऽपि यत्र पूर्व कर्मण्येकसंज्ञावरुद्धे संज्ञान्तरस्य वैयर्थ्यप्रसङ्गः तत्र तेन स्वविषयसिद्ध्यर्थं कर्मान्तरकल्पनावश्यक्येव । अस्ति च प्रकृते ज्योतिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावे ऽप्यविच्छिन्नेऽधिकारे समाम्नानेन स्त्रीग्रमवरोधः, ज्योतिरादीनां च विच्छिन्नेऽधिकारे समाम्नानात् कार्यान्तराभावाच्च वैयर्थ्यप्रसङ्गेन तैरनवरोधः । अत एव ' वसन्ते वसन्ते ज्योतिषा यजेते" त्यत्रा विच्छिन्नेऽधिकारे समाम्नानात् ज्योतिस्संज्ञायाश्च ज्योतिष्टोमसंज्ञैकदेशत्वेन तदानुगुण्याच्च कर्मान्तरत्वम् । नच "अथैषज्योति" रित्यस्यैव

भासमानप्रतियोगित्वे महानसीयत्वावच्छिन्नत्वं भासते, स्वावच्छिन्नवह्नि वृत्तिप्रतियोगिताकत्वस्य अभावांशे प्रतियोगिविशेषणतापन्नमहानसीयत्वस्य सम्बन्धघटकत्वादिति तत्र वह्नित्वावच्छिन्नधर्मिकमहानसीयत्व प्रकारकज्ञानस्यापेक्षा, न तु धर्मान्तरावच्छिन्नधर्मिकस्य, धर्मान्तरविशेषित वह्निवृत्तित्वेन तत्र प्रतियोगिताया अभानादितिचेत् ? ; तर्हि प्रतियोगितावच्छेदकप्रकारकज्ञानमन्तरेणाप्यभावप्रत्यक्षसामान्यापत्तिः, प्रत्यक्षविशेष एव तद्धेतुतायाः स्वीकृतत्वात् . एवमप्यनतिप्रसङ्गेन प्रतियोगिविशेषिताभावबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया प्रतियोगितावच्छेदक प्रकारकज्ञानस्य हेतुत्वादेव निर्वाहे स्वतन्त्रतद्धेतुताया निर्बीजत्वापाताच्च. अस्तुवैताद्दशरीत्यैव हेतुहेतुमद्भावः, तथापि समवायितया वाच्यत्वं नास्तीत्यत्र वाच्यत्वत्वसामानाधिकरण्याविशेषितस्वावच्छिन्नप्रतियोगिताया एव समवायित्वसंसर्गघटकतया भानोपगमसम्भवेन वाच्यत्व स्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानस्य तत्रानपेक्षणीयत्वमुपपद्यत इति ।

अत्रेदं समाधानमवधेयम् ; तदुभयधर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तदुभयैकतरधर्मावच्छिन्नधर्मिकतदितरप्रकारकज्ञानत्वेन हेतुता , समवायितया वाच्यत्वाभावस्य व्यधिकरणसमानाधिकरणयोः समवायित्ववाच्यत्वत्वयोरुभयोरेव प्रतियोगितावच्छेदकत्वपर्याप्तिरवश्यमङ्गीकार्या, समवायित्वमात्रस्य प्रतियोगितावच्छेदकत्वे वाच्यत्वत्वप्रकारकज्ञानमन्तरेणापि ताद्दशाभावप्रतीत्यापत्तेः, अत्र समवायितया वाच्यत्वं नास्तीति प्रतीत्या समवायित्ववाच्यत्वत्वोभयपर्याप्तप्रतियोगितावच्छेदकत्वानवगाहने तस्याः समवायिवाच्यत्ववदिदमिति भ्रमविरोधित्वानुपपत्तेश्च, तं प्रति समवायितया प्रमेयत्ववाच्यत्वोभयं नास्तीत्यादिनिश्चयव्यावृत्तेन तदुभयांशे प्रतियोगितावच्छेदकतापर्याप्त्यवगाहिनिश्चयत्वेनैव प्रतिबन्धकत्वात् ।

नच विलक्षणवाच्यत्वप्रकारतानिवेशेनैव दर्शितनिश्चयव्यावृत्तिसम्भवे तदु भयांशे ऽवच्छेदकत्वपर्याप्त्यवगाहित्वमप्रयोजकमिति वाच्यम्, यत स्तद्धर्मे अभावप्रतियोगितावच्छेदकत्वपर्याप्तिस्तदवच्छिन्नस्य अभावविरो धित्वप्रयोजिका तदवगाहित्वमेव अभावबुद्धेस्तदवच्छिन्नविशिष्टज्ञानप्रति बन्धकतायां तन्त्रम्, समवायितया वाच्यत्वप्रमेयत्वोभयं नास्तीति बुद्धेः समवायित्ववाच्यत्वद्वोभयविशिष्टवत्ताबुद्ध्यप्रतिबन्धकत्वे उभयांशे तत्रावच्छेदकतापर्याप्त्यनवगाहित्वमेव बीजम्, तस्य च समवायितया वाच्यत्वं नास्तीति धीसाधारण्ये तस्यास्तादृशधीप्रतिबन्धकत्वम्, न तु उक्तोभयाभावबुद्धेरिति विशेष एव नोपपद्यते; यदि चैतस्याः प्रतीतेः प्रतिबन्धकत्वम्, नान्यस्या इत्यत्र विषयतावैचित्र्यमात्रं बीजमास्थी यते?; तदा समानाधिकरणधर्मावच्छिन्नाभावविषयिण्या घटो नास्तीत्यादि बुद्धेरपि प्रतियोगितावच्छेदकत्वावगाहित्वं विलीयताम्, न हि तत्र घटत्वादिविशिष्टधीप्रतिबन्धकत्वानुरोधमन्तरेण युक्त्यन्तरं परिस्फुरति, स च भवतामकिञ्चित्कर एव, 'कपालसमवेतद्रव्यं नास्ति' 'नील घटो नास्ती' त्यादिप्रतीतिव्यावृत्तप्रकारताविशेषस्यैव तादृशधीप्रतिबन्ध-कताबीजत्वसम्भवात्; तथाच तत्रैव समवायितया वाच्यत्वं नास्ती त्यादिव्यधिकरणधर्मावच्छिन्नाभावबुद्धावपि वाच्यत्वत्वांशे प्रतियोगिता वच्छेदकत्वावगाहनमशक्यापह्नवमेवेति वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवा यित्वादिप्रकारकज्ञानमन्तरेण न तत्सम्भवः ।

अथ यत्त्वतत्त्वाननुगमेन प्रतियोगितावच्छेदकभेदेन तत्प्रकारकज्ञान हेतुताभेदस्यावश्यकतया महानसीयत्ववह्नित्वादिरूपसमानाधिकरणधर्माव-च्छिन्नाभावप्रत्यक्षं प्रति एकधर्मावच्छिन्नविशेष्यकापरधर्मप्रकारकज्ञानत्वेन हेतुता वाच्या, न तु व्यधिकरणसमवायित्वसमानाधिकरणवाच्यत्वत्वा द्युभयधर्मावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षे, समवायित्वाद्यवच्छिन्नप्रतियोगि

ताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति समवायित्वादिप्रकारकज्ञानत्वेन क्लृप्तका रणतयैव तन्निर्वाहान्न तत्र वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारक ज्ञानापेक्षेति चेन्न; प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्व मभावप्रतीत्याऽवगाह्यते, न तु स्वातन्त्र्येणेति नियमेन समवायि वाच्यत्वं नास्तीत्याद्याकारिकाया एव व्यधिकरणधर्मावच्छिन्नाभावप्रतीतेरुपगन्तव्य तया समवायित्वविशिष्टवाच्यत्वत्वावच्छिन्नवैशिष्ट्यावगाहिन्यां तादृश बुद्धौ च वाच्यत्वं समवायीति विशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्या पेक्षितत्वेन विशकलितसमवायित्वादिप्रकारकज्ञानदशायां तादृशाभावप्रत्य क्षस्य अनुत्पत्त्या तदानीं तदापत्तिवारणाय तादृशाभावप्रत्यक्षेपि वाच्य त्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानस्य हेतुताया आवश्यकत्वा दिति । अत्र च विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकधी हेतुत्वमनङ्गीकुर्वतां घटत्वादिनिर्विकल्पकात् घटो नास्तीत्यादिप्रत्ययस्येव निर्धर्मितावच्छेदककसमवायित्वादिप्रकारकज्ञानादपि समवायित्वावच्छिन्नवा-च्यत्वाद्यभावविषयकस्य समवायि वाच्यत्वं नास्तीत्यादिप्रत्ययस्योपगम सम्भवात् वाच्यत्वत्वाद्यवच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानत्वेन प्रति योगिज्ञानस्य अभावप्रत्यक्षहेतुता न सिध्यतीति विशिष्टवैशिष्ट्यबोधे विशे षणतावच्छेदकप्रकारकज्ञानहेतुतामतमाश्रित्यैव उक्तरीत्या अभावलौकिकत्वा वच्छिन्नहेतुभूतप्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूप कारणबाधपर-तया मूलं व्याख्येयम्,— तच्चानुचितम्; उक्तविशेषकारणताकल्पनोपजीव्य विशिष्टवैशिष्ट्यबोधसामान्यहेतुताश्रयविशेषणतावच्छेदकविशिष्टज्ञानाभाव-स्यैव दर्शयितुमुचितत्वात्. अतो मूले हेतुत्वादित्यस्यापेक्षणीयत्वादित्यर्थ इत्या-शयेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधिया अपेक्षणे विशि ष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकविशिष्टविशेषणज्ञानहेतुत्वमेव हेतुत्वेना भिमतम्; तथा च जन्यताया अभावविषयकत्वावच्छिन्नत्वमविवक्षितम्, विशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्य विशिष्टवैशिष्ट्यबोधत्वावच्छिन्ना भावधीनिष्ठजन्यताप्रतियोगिभूतस्याभावेन समवायितया वाच्यत्वं ना-

[दी] अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमव गाहमानो विशेषणस्यापि घटत्वादेः तदवच्छेदकत्वमवगाहते;

---

स्तीत्यादिप्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावावगाहित्वासम्भव इत्यर्थपरतया तद्व्याख्यानमेवोचितम् , न तु विशिष्टवैशिष्ट्यबोधहेतुतामुपजीव्य कल्प्य हेतुत्वान्तरपरतयेत्याशयेनाह – (दीधितौ) **विशेषणतावच्छेदके** ति । अयं भावः;– वाच्यत्वं समवायीति ज्ञानमन्तरेण समवायिवाच्यत्ववानय मिति विशिष्टवैशिष्ट्यबोधानुत्पत्त्या वाच्यत्वत्वावच्छिन्ननिरूपितत्वेन भासमानवैशिष्ट्ये समवायित्वावच्छिन्ननिरूपितत्वावगाहिनि ज्ञाने वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वादिप्रकारकज्ञानत्वेन हेतुताकल्पनमावश्यकम्, समवायिवाच्यत्वं नास्तीति व्यधिकरणधर्मावच्छिन्ना भावबुद्धेरपि वाच्यत्वत्वावच्छिन्नीयत्वेन भासमान अनुयोगितारूपवैशिष्ट्ये समवायित्वावच्छिन्नीयत्वावगाहितया तत्र तादृशज्ञानमवश्यापेक्षणीयमिति ।

ननु वैशिष्ट्यांशे वाच्यत्वत्वनिष्ठधर्मितावच्छेदकतानिरूपकविशेष णतापन्नसमवायित्वावच्छिन्नप्रतियोगिताकत्वावगाहिबुद्धावेव तदवच्छिन्न धर्मिकसमवायित्वप्रकारकज्ञानं हेतुः, व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ च वाच्यत्वत्वावच्छिन्ने समवायित्वस्य विशेषणत्वं नोपेयते, अपि तु तद्वि शेषणतानापन्नस्यैव तस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावांशे विशेषणत्वमुपेयते, वाच्यत्वसंसर्गतावच्छेदकतयैव वा तथाविधतदव- च्छिन्नत्वस्य प्रतियोगितांशे भानमुपेयते, तथाच तत्र नोपदर्शितज्ञाना पेक्षेत्याशङ्कां परिजिहीर्षुर्भावं व्याचष्टे — **अभावप्रत्ययो हा** ति । **विशेषणस्य** — प्रतियोगिघटादिनिरूपितविशेषणतापन्नस्य घटत्वादेः । **प्रतियोगितावच्छेदकत्वमवगाहते** – प्रतियोगितया भासमानघटादिनि- रूपितविशेषणतावच्छिन्ना या स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छि-

[दी] न स्वातन्त्र्येण, घटोनास्तीत्येव प्रतीतेः, तदिहाभावप्रत्ययो यदि व्यधि करणधर्मेणावच्छिन्नं प्रतियोगिनं नावगाहते?, नावगाहतएव तदा तस्यापि प्रतियोगितावच्छेदकत्वम् ।

---

न्ना घटत्वादिनिष्ठप्रकारता तच्छाली भवतीति यावत् । **न तु स्वातन्त्र्येण** — "प्रतियोग्यविशेषणत्वेन घटत्वादेः प्रतियोगितावच्छेदकत्व मवगाहते" इत्यनुषङ्गेणान्वयः । तादृशसम्बन्धावच्छिन्नघटत्वादिनिष्ठ प्रकारता प्रतियोगिनिरूपितप्रकारतानवच्छिन्ना न भवतीत्यर्थः । **घटो नास्तीत्येवे** ति । अभावांशे स्वातन्त्र्येण घटत्वादिवैशिष्ट्योल्लेखरहिताया एवेत्यर्थः । **प्रतीतेः** — 'अनुभवा' दिति शेषः । एतावता किमायातमित्यत आह — **तदिहे** ति । **अवच्छिन्नम्** — विशेषितम् । **तस्यापि प्रतियोगितावच्छेदकत्वम्** — तस्य प्रतियोगितावच्छेदकत्व मपि, तथाच मानाभावेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वा सिद्धिरिति भावः ।

अथ व्यधिकरणधर्मस्य प्रतियोगिविशेषणतयैव व्यधिकरणधर्मा वच्छिन्नाभावबुद्धौ भानमुपेयते, नचैवं तादृशबुद्धेः समवायित्वादिरूप विशेषणतावच्छेदकप्रकारकवाच्यत्वादिज्ञानजन्यतावच्छेदकाक्रान्ततया तादृ शज्ञानं विना व्यधिकरणधर्मावच्छिन्नाभावबुद्ध्यनुपपत्तिरिति वाच्यम्, भ्रमात्मकतादृशज्ञानदशायामेव तद्बुद्ध्युपगमात् । विशेषदर्शनदशाया मपि आहार्यतत्प्रकारकज्ञानादेव तद्बुद्धिसम्भवात् । अनाहार्यस्यैव विशेष णतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वे विशेषदर्शन कालीनायाः समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेरगत्या वाच्यत्वा द्यधिकरणकसमवायित्वाद्यभावावगाहित्वमुपेयते, वाच्यत्वं समवायीत्यादिभ्रमा नन्तरं समवायिवाच्यत्वं नास्तीत्याकारकप्रत्यय एव व्यधिकरणधर्मस्य

# गवि शशशृङ्गं नास्तीति प्रतीते रसिद्धेः ।

---

अथावगाहते? तर्हि भ्रम एव ; नच ततोर्थसिद्धिरिति भावः ।

---

प्रतियोगितावच्छेदकत्वे मानमास्ताम्, तत्र तदवगाहितायाः सर्वानुभवसिद्धत्वेनापह्नोतुमशक्यत्वात् ! तादृशप्रतीतेर्वाच्यत्वे समवायित्वाभावावगाहित्वोपगमे तत्पूर्वं वाच्यत्वं समवायीति भ्रमापेक्षानुपपत्तेरित्याशयेना शङ्कते- **अथावगाहत** इति । समाधत्ते- **तर्हि भ्रम एवे** ति । व्यधिकरण धर्मस्य प्रतियोगितावच्छेदकत्वांशेपि भ्रम एवेत्यर्थः । वैशिष्टयभान एव अवच्छेदकताया भानादवच्छेदकताया वैशिष्टयनियततया तद्बाधे तस्या अपि बाधादिति भावः । नचैवं **गवि शशशृङ्गं नास्तीति प्रतीतेरसिद्धे** रिति मूलासङ्गतिः, तादृशप्रतीतेः शृङ्गांशे शशीयत्वावगाहित्वानभ्युपगमे शशीयत्वे शृङ्गनिष्ठप्रतियोगितावच्छेदकत्वावगाहत्वासम्भवः, तदवगाहित्वे भ्रमत्वमित्युभयथापि व्यधिकरणधर्मावच्छिन्नाभावासाधकत्वात् तादृशप्रतीतिनिराकरणस्यानुपयुक्तत्वादिति वाच्यम्, अभ्रान्तानामपि गवि शशशृङ्ग नास्तीति व्यवहारमूलप्रतीतिसत्त्वेनोक्तनियमस्यैव असिद्ध्या व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव, तादृशप्रतीते र्गोशृङ्गाधिकरणकशशीयत्वाभावावगाहित्वोपगमे तस्याः गवाधिकरणकाभावावगाहितानुभवविरोध इत्याशङ्कामुत्थाप्याभ्रान्तपुरुषीय गवाधिकरणकाभावावगाहितादृशाभावप्रतीतिनिराकरणपरतया तद्ग्रन्थस्यावतारणीयत्वात् । नन्वभ्रान्तानां गवि शशशृङ्गं नास्तीति प्रतीतिर्माभूत्, शशशृङ्गं नास्तीति प्रतीतिर्नापह्नोतुं शक्यते, सर्वेषामेव तथाविध व्यवहारदर्शनादित्याशङ्कायां शशृङ्गं नास्तीत्यादिमूलावतारो बोध्यः ।

## शशशृंगं नास्तीति च शशे शृंगाभाव इत्यर्थः॥

॥ इति तत्त्वचिन्तामणौ व्यधिकरणधर्मावच्छिन्नाभाव बिचारः ॥

---

यद्यपि 'शशशृङ्गं नास्ती' ति शब्देन शशे शृङ्गाभाव इत्याकारकः शाब्द-बोधो न शक्यते जनयितुम्, अनुयोगिवाचकपदोत्तरं सप्तमीविरहेण निराकांक्षत्वात्; तथापि पदार्थोपस्थित्यादिमूलकतादृशमानसबोधजननेच्छया व्युत्पन्नानां तथा प्रयोग इत्याशयः ।

ननु घटत्वेन घटो नास्तीत्याकारकस्याभावप्रत्ययस्यानुभविकतया प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमभावप्रत्ययोऽवगाहत इति न नियमः, तादृशप्रतीत्या स्वातन्त्र्येण भासमाने घटत्वादौ प्रतियोगितावच्छेदकत्वावगाहनात्; अन्यथा घटत्वेनेत्याकारकतानुपपत्तेः, तथाच घटत्वेन पटो नास्तीत्यादावपि घटत्वादौ पटादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहनं निराबाधमेवेति व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव; नच तत्र व्यधिकरणधर्मस्यावच्छेदकत्वावगाहनसम्भवेपि अतिरिक्ताभावकल्पनागौरवभयेन तादृशप्रतीतेः पटाद्यधिकरणकघटत्वाद्यभावावगाहित्वमेव स्वीक्रियत इति वाच्यम्; असति बाधके तच्छब्दोल्लेखिप्रतीतेः तच्छब्दप्रतिपाद्यार्थविषयकत्वापरित्यागात् पटाद्यधिकरणकघटत्वाद्यभावस्य च घटत्वेन पटो नास्तीत्यादिशब्दात्कथमप्यप्रतीतेः प्रतीतिबलात्पदार्थान्तरासिद्धौ तत्पदार्थकल्पनागौरवस्य फलमुखत्वेनाबाधकत्वात् । नच प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणभेदेन तादृशप्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावावगाहिता न सम्भवतीति युक्तम्,

घटत्वावच्छिन्नधर्मिकघटत्वादिप्रकारकज्ञानत्वेन प्रतियोगिज्ञानहेतुतायां माना भावात्, तादृशज्ञानं विनैव घटत्वेन पटो नास्तीत्याकारकस्य घटत्वादि विशिष्टपटादिवैशिष्ट्यानवगाहिनो ऽभावप्रत्यक्षस्य स्वीकारात् ।

वस्तुतस्तु-- कुत्राप्यभावबुद्धौ स्वातन्त्र्येण प्रतियोगितावच्छेदक विशिष्टप्रतियोगिज्ञानस्य न हेतुतास्ति, नच तदकल्पने प्रतियोगिज्ञान शून्यकाले नास्तीत्याकारकप्रतियोग्यविषयकाभावप्रत्यक्षस्य घटत्वादिनिर्वि कल्पकानन्तरं "विशेष्ये विशेषण" मिति रीत्या घटाभावप्रत्यक्षस्यचापत्ति रिति वाच्यम्; प्रतियोगिज्ञानहेतुत्वमतेपि घटाभावे प्रतियोगितया घटादिरूपप्रतियोगिज्ञानविरोधिबाधादिग्रहसत्त्वे प्रतियोग्यविषयकाभावग्रहा पत्तेर्दुर्वारत्वात्; यदि च निर्धर्मितावच्छेदकप्रतियोगिभाने बाधकाभावात् प्रतियोग्यविषयकाभावप्रत्ययो नापादयितुं शक्यते?, तदापि तादृशबाध दशायां प्रतियोगिधर्मितावच्छेदकतानापन्नाभावत्वप्रकारकस्य स्वातन्त्र्येण प्रतियोगिविषयकस्य "नास्ति, घटीयश्चे"त्याद्याकारकसमूहालम्बनप्रत्यक्षस्या पत्तिः. एवं घटत्वावच्छिन्नप्रतियोगिताकाभावस्य यदा भानं तदा निर्वि- कल्पकोपस्थितद्रव्यत्वादेः विशेष्ये विशेषणमिति रीत्या घटाद्यंशे भाना पत्तिः कारणबाधेन न शक्यते वारयितुम्, तादृशाभावस्य द्रव्यत्वा वच्छिन्नप्रतियोगिताकत्वविरहेण तद्भाने द्रव्यत्वादिप्रकारकज्ञानस्यानपेक्ष णात्. यदि च यादृशप्रकारतावच्छिन्नधर्मे स्वावच्छिन्नप्रतियोगिताकत्वं सम्बन्धावच्छिन्नधर्म्मन्तरनिरूपितप्रकारता तदन्यप्रकारतानिरूपितविशेष्य तापन्नविशेषणविषयतानिरूपितसंसर्गतासम्बन्धेन भानं प्रत्यभावीयानुयोगिता विशेषभेदस्य कारणतां कल्पयित्वा ईदृशापत्तिः, प्रतियोगिप्रकारतानिरू- पितधर्मितावच्छेदकतापन्नावृत्तिप्रकारताविशेषसम्बन्धेन लौकिकप्रत्यक्षं प्रत्य भावत्वभेदस्य कारणतां कल्पयित्वा च पूर्वापत्तिश्च वार्यते? तदा तावतैव सकलापत्तिवारणादलं प्रतियोगिज्ञानहेतुतया ।

नचैवमपि प्रतियोग्यविषयकस्य अभावत्वाप्रकारकप्रत्ययस्यापत्तिर्विना प्रतियोगिज्ञानहेतुतां न शक्यते वारयितुमिति वाच्यम्, प्रतियोगिज्ञानं विना प्रतियोग्यविषयकस्य इदंत्वादिना ऽभावप्रत्यक्षस्य इदंत्वादिरूप तादृशविशेषणज्ञानासत्वे च तादृशाभावनिर्विकल्पकस्येष्टत्वात्, अभाव निर्विकल्कानभ्युपगमे प्रतियोगिज्ञानहेतुतयापि तद्वारणासम्भवात् इदं त्वादिना ऽभावप्रत्यक्षे व्यभिचारवारणायाऽभावत्वप्रकारकाभावप्रत्यक्षं प्रत्येव प्रतियोगिज्ञानस्य हेतुताया वाच्यत्वात विशेषणानवच्छिन्नविषयतासम्ब न्धेन प्रत्यक्षं प्रत्यभावभेदस्य हेतुतां स्वीकृत्य तद्वारणे च मयापि तस्य तथैव वारणीयत्वात ।

वस्तुतस्तु — आपाद्याप्रसिद्ध्यैव तादृशफलापत्त्यनवकाशः, प्रसि- द्धाया घटो नास्तीत्यादिबुद्धेर्घटत्वादिविशिष्टवैशिष्ट्यवगाहितया तत्र प्रतियोगितावच्छेदकघटत्वादिप्रकारकज्ञानस्य विशेषणतावच्छेदकप्रकारक ज्ञानविधया हेतुतायाः क्लृप्तत्वात् तादृशकारणविरहादेव न तच्छून्य काले तदापत्तिः ।

यस्तु अनाहार्यप्रतियोगितावच्छेदकविशिष्टप्रकारकोपलम्भविरहो विशेष्यीभूतधर्मिप्रत्यासन्नो ऽभावग्रहे हेतुः, तथाच यस्य पुंसः समवायित्वादिविशिष्टवाच्यत्वादिप्रकारकोऽनाहार्यभ्रमोऽप्रसिद्धः तदीयः समवायितया वाच्यत्वं नास्तीत्याकारकप्रत्ययो न व्यधिकरणधर्मावच्छिन्ना भावमवगाहितुमीष्टे, तदीयतादृशप्रतियोग्युपलम्भविरहरूपतदीयाभावप्रत्यक्ष कारणस्याप्रसिद्धेरिति तत्पुरुषीयतादृशप्रत्ययस्य वाच्यत्वाद्यनुयोगिकसम वायित्वाद्यभावविषयकत्वावश्यकत्वे सर्वत्रैव तद्विषयकत्वमुचितम्, एका कारप्रतीतेः पुरुषभेदेन विषयतावैचित्र्यविरहादिति मिश्रोक्तो व्यधिकरण धर्मावच्छिन्नाभावनिराकरणस्य पन्थाः, सोपि न साधीयान्; अभाव बुद्धौ स्वप्रतियोगितावच्छेदकविशिष्टस्वप्रतियोग्युपलम्भाभावत्वेन एक

[दी] यदि पुनरानुभाविको लोकानां स्वरसवाही घटत्वेन पटोनास्तीत्यादि प्रत्ययः? तदा तादृशाभाववारणं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम्॥

श्रीमद्रघुनाथभट्टाचार्यशिरोमणि विरचितायां तत्त्वचिन्तामणिव्याख्यायां दीधित्यपराख्यायां व्याधिकरणधर्मावच्छिन्नाभावविचारस्समाप्तः ॥

---

कारणतायाः स्वत्वाननुगमेन दुर्वचतया विशिष्य कारणताकल्पनस्याव-श्यकत्वे यत्र तादृशोपलम्भः प्रसिद्धः तत्रैव तादृशोपलम्भानन्तरमभाव प्रत्ययवारणाय तदभावहेतुत्वोपगमात् व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ क्वचिदप्रसिद्ध्या तदभावहेतुत्वासम्भवेपि सन्निकर्षादिघटितसामग्रीतः तदुत्पत्तौ बाधकाभाव इत्यत आह — **यदि पुन** रिति । **स्वरसवाही**–विवादशून्यः । "घटत्वेन घटो नास्ती" ति पाठः; "घटत्वेन पटो नास्ती" ति पाठो न साधुः; तादृशप्रतीतेः पटाद्यनुयोगिकघटत्वाद्यभावा-वगाहिताया एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृभिरुपगमात् प्रति योगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वं भासत इति नियमस्य तदाकारप्रतीतिबलेन अशक्यवारणत्वात् । **आनुभाविक** इत्यस्य व्यधि करणधर्मस्यावच्छेदकत्वावगाहितया अनुभवसिद्ध इत्यर्थकतया वा कथं चित्सङ्गमनीयः । **गीर्वाणगुरूणामपि न शक्य** मित्यनेन प्रतीतिकारण बाधेन तादृशाभावनिराकरणनिर्भरा मिश्रादय आक्षिप्ताः । **यदि तदे**त्यनेन तादृशप्रतीतेरानुभाविकत्वे विवादं प्रदर्श्य तादृशाभावस्याऽपारमार्थिकत्वं सूचितम् ॥

इति महामहोपाध्याय गदाधरभट्टाचार्यचक्रवर्ति
विरचिते तत्त्वचिन्तमणि दीधितिव्याख्याने
व्यधिकरणधर्मावच्छिन्नाभावखण्डनम् ।

॥ **चतुर्दशलक्षणी समाप्ता** ॥

अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
यस्य यज्ञेषु राजेन्द्र शतसंख्येषु वै पुरा ॥३६॥
देवान्मनुष्यान् गन्धर्वानत्यरिच्यन्त दक्षिणाः ।
न जातो जनिता नान्यः पुमान् यः सम्प्रदास्यति ॥३७॥
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥३८॥
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
शिबिमौशीनरं चैव मृतं सृंजय शुश्रुम ॥३९॥
य इमां पृथिवीं सर्वां चर्मवत्समवेष्टयत् ।
महता रथघोषेण पृथिवीमनुनादयन् ॥४०॥
एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ।
यावदस्य गवाश्वं स्यादारण्यैः पशुभिः सह ॥४१॥
तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ।
न वोढारं धुरं तस्य कंचिन्मेने प्रजापतिः ॥४२॥
न भूतं न भविष्यं च सर्वराजसु सृञ्जय ।
अन्यत्रौशीनराच्छैब्याद्राजर्षेरिन्द्रविक्रमात् ॥४३॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥४४॥
भरतं चैव दौष्मन्तिं मृतं सृञ्जय शुश्रुम ।
शाकुन्तलं महात्मानं भूरिद्रविणतेजसम् ॥४५॥
यो बद्ध्वा त्रिशतं चाश्वान् देवेभ्यो यमुनामनु ।
सरस्वतीं विंशतिं च गङ्गामनु चतुर्दश ॥४६॥
अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान् स महातेजा दौष्यन्तिर्भरतः पुरा ॥४७॥
भरतस्य महत्कर्म सर्वराजसु पार्थिवाः ।

खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥४८॥
परं सहस्राद्यो ऽबध्नाद्धयान्वेदीर्वितत्य च ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥४९॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥५०॥
रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥५१॥
विधवा यस्य विषये नानाथाः काश्चनाभवन् ।
सर्वस्यासीत्पितृसमो रामो राज्यं यदन्वशात् ॥५२॥
कालवर्षी च पर्जन्यः सस्यानि समपादयत् ।
नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ॥५३॥
प्राणिनो नाप्सु मज्जन्ति नानर्थे पावको ऽदहत् ।
न व्यालतो भयं चासीद्रामे राज्यं प्रशासति ॥५४॥
आसन् वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
अरोगाः सर्वसिद्धार्था रामे राज्यं प्रशासति ॥५५॥
नान्योन्येन विवादोभूत् स्त्रीणामपि कुतो नृणाम् ।
धर्मनित्याः प्रजाश्चासन् रामे राज्यं प्रशासति ॥५६॥
सन्तुष्टाः सर्वसिद्धार्था निर्भयाः स्वैरचारिणः ।
नराः सत्यव्रताश्चासन् रामे राज्यं प्रशासति ॥५७॥
नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥५८॥
स चतुर्दश वर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधान् जारूथ्यान्[1]आजहार निरर्गलान् ॥५९॥
युवा श्यामो लोहिताक्षो मातङ्ग इव यूथपः ।

(१) जरूढया

आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ॥६०॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ॥६१॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥६२॥
भगीरथं च राजानं मृतं सृंजय शुश्रुम ।
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥६३॥
असुराणां सहस्राणि बहूनि सुरसत्तमः ।
अजयद्बाहुवीर्येण भगवान् पाकशासनः ॥६४॥
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥६५॥
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः ।
शतं शतं रथे नागाः पद्मिनो हेममालिनः ॥६६॥
सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः ।
गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ॥६७॥
उपह्वरे निवसतो यस्याङ्के निषसाद ह ।
गङ्गा भागीरथी तस्मादुर्वशी चाभवत् पुरा ॥६८॥
भूरिदक्षिणमिक्ष्वाकुं यजमानं भगीरथम् ।
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥६९॥
स चेन्ममार सृंजय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥७०॥
दिलीपं च महात्मानं मृतं सृंजय शुश्रुम ।
यस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ॥७१॥
य इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।
ददौ तस्मिन् महायज्ञे ब्राह्मणेभ्यः समाहितः ॥७२॥

यस्येह यजमानस्य यज्ञे यज्ञे पुरोहितः ।
सहस्रं वारणान् हैमान् दक्षिणामत्यकालयत् ॥७३॥
यस्य यज्ञे महानासीद्यूपः श्रीमान् हिरण्मयः ।
त देवाः कर्म कुर्वाणाः शक्रज्येष्ठा उपासत ॥७४॥
चषाले यस्य सौवर्णे तस्मिन् यूपे हिरण्मये ।
ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा ॥७५॥
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥७६॥
एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे ।
यस्येभा हेमसञ्छन्नाः पथि मत्ताः स्म शेरते ॥७७॥
राजानं शतधन्वानं दिलीपं सत्यवादिनम् ।
ये ऽपश्यन् सुमहात्मानं तेपि स्वर्गजितो नराः ॥७८॥
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायशब्दो ज्याशब्दो शब्दो वै दीयतामिति ॥७९॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥८०॥
मान्धातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥८१॥
समृद्धो युवनाश्वस्य जठरे यो महात्मनः ।
पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः ॥८२॥
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन् देवाः कमयं धास्यतीति वै ॥८३॥
मामेव धास्यतीत्येवमिन्द्रोथाभ्युपपद्यत ।
मान्धातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥८४॥
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।

तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥८५॥
तं पिबन् पाणिमिन्द्रस्य शतमह्ना व्यवर्धत ।
स आसीद्द्वादशसमो द्वादशाहेन पार्थिवः ॥८६॥
तमिमं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥८७॥
यश्चाङ्गारन्तु नृपतिं मरुत्तमसितं गयम् ।
अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् ॥८८॥
यौवनाश्वो यदाङ्गारं समरे प्रत्ययुध्यत ।
विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ॥८९॥
यत्र सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥९०॥
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददद्रोहितान् मत्स्यान् ब्राह्मणेभ्यो विशाम्पते ॥९१॥
हैरण्यान् योजनोत्सेधानायतान् दशयोजनम् ।
अतिरिक्तान् द्विजातिभ्यो व्यभजंस्त्वितरे जनाः ॥९२॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥९३॥
ययातिं नाहुषं चैव मृतं सृंजय शुश्रुम ।
य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ॥९४॥
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन् महीम् ।
ईजानः क्रतुभिर्मुख्यैः पर्यगच्छद्वसुन्धराम् ॥९५॥
इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च ।
तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्वतैः ॥९६॥
व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान् ।
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥९७॥

अन्त्येषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान् ।
पूरुं राज्येभिषिच्याथ सदारः प्राविशद्वनम् ॥९८॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥९९॥
अम्बरीषं च नाभागं मृतं सृंजय शुश्रुम ।
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमम् ॥१००॥
यः सहस्रं सहस्राणां राज्ञामयुतयाजिनाम् ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यस्त्वमन्यत ॥१०१॥
नैतत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः ॥१०२॥
शतं राजसहस्राणि शतं राजशतानि च ।
सर्वेश्वमेधैरीजानास्तेन्वयुर्दक्षिणायनम् ॥१०३॥
स चेन्ममार सृंजय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥४॥
शशबिन्दुं चैत्ररथ मृतं शुश्रुम सृंजय ।
यस्य भार्यासहस्राणां शतमासीन्महात्मनः ॥५॥
सहस्रंतु सहस्राणां यस्यासन् शाशबिन्दवाः ।
हिरण्यकवचाः सर्वे सर्वेचोत्तमधन्विनः ॥६॥
शतं कन्या राजपुत्रमेकैकं पृथगन्वयुः ।
कन्यांकन्यां शतं नागा नागंनागं शतं रथाः ॥७॥
रथेरथे शतं चाश्वा देशजा हेममालिनः ।
अश्वे अश्वे शतं गावो गां गां तद्वदजाविकम् ॥८॥
एतद्धनमपर्यन्तमश्वमेधे महामखे ।
शशबिन्दुर्महाराज ब्राह्मणेभ्यः समर्पयत् ॥१०९॥
स चेन्ममार सृंजय चतुर्भद्रतरस्त्वया ।

पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥११०॥
गयं चाधूर्तरजसं मृतं शुश्रुम सृंजय ।
यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥१११॥
यस्मै वह्निर्वरान्प्रादात्ततो वव्रे वरान् गयः ।
ददतो मेऽक्षयं वित्तं धर्मे श्रद्धा च वर्धताम् ॥११२॥
मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन ।
लेभे च कामांस्तान् सर्वान् पावकादिति नः श्रुतम् ॥११३॥
दर्शेन पूर्णमासेन चातुर्मास्यैः पुनःपुनः ।
अयजद्धयमेधेन सहस्रं परिवत्सरान् ॥११४॥
शत गवां सहस्राणि शतमश्वशतानि च ।
उत्थायोत्थाय वै प्रादात् सहस्रं परिवत्सरान् ॥११५॥
तर्पयामास सोमेन देवान्वित्तैर्द्विजानपि ।
पितॄन् स्वधाभिः कामैश्च स्त्रियः स पुरुषर्षभ ॥११६॥
सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम् ।
दक्षिणामददद्राजा वाजिमेधे महाक्रतौ ॥११७॥
यावत्यः सिकता राजन् गङ्गायां पुरुषर्षभ ।
तावतीरेव गाः प्रादादाधूर्तरजसो गयः ॥११८॥
स चेन्ममार सृंजय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥११९॥
रन्तिदेवं च सांकृत्यं मृतं सृञ्जय शुश्रुम ।
सम्यगाराध्य यः शक्राद्वरं लेभे महातपाः ॥१२०॥
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
श्रद्धा च नो मा व्यपगान्मा च याचिष्म कञ्चन ॥१२१॥
उपातिष्ठन्त पशवः स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥१२२॥

महानदी चर्मराशेरुत्क्लेदात्ससृजे यतः ।
ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ॥२३॥
ब्राह्मणेभ्यो ददौ निष्कान् सदसि प्रतते नृपः ।
तुभ्यं तुभ्यं निष्कमिति यदा क्रोशन्ति वै द्विजाः ॥२४॥
सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान् सम्प्रपद्यते ।
अन्वाहार्योपकरणं द्रव्योपकरणं च यत् ॥२५॥
घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ।
नासीत्किंचिदसौवर्णं रन्तिदेवस्य धीमतः ॥२६॥
सांकृते रन्तिदेवस्य यां रात्रिमवसन् गृहे ।
आलभ्यन्त शतं गावः सहस्राणि च विंशतिः ॥२७॥
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपं भूयिष्ठमश्नीध्वं नाद्य मांसं यथापुरा ॥२८॥
स चेन्ममार संजय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥२९॥
सगरं च महात्मानं मृतं शुश्रुम संजय ।
ऐक्ष्वाकं पुरुषव्याघ्रमतिमानुषविक्रमम् ॥१३०॥
षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे ।
नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव ॥३१॥
एकच्छत्रा मही यस्य प्रतापादभवत्पुरा ॥
योऽश्वमेधसहस्रेण तर्पयामास देवताः ॥३२॥
यः प्रादात्कनकस्तम्भं प्रासादं सर्वकाञ्चनम् ।
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलम् ॥३३॥
द्विजातिभ्योनुरूपेभ्यः कामांश्च विविधान् बहून् ।
यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः ॥३४॥

[दी] धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः । आद्या भिन्ना, द्वितीयात्वभिन्नेति ध्येयम् ।

---

यदि विरोधस्यानुमितिं प्रति साक्षाद्विरोधितया हेत्वाभासत्वमुपपादयितुं शक्यते? तदा समानाधिकरणवृत्तित्वांशे निर्धर्मितावच्छेदकं समानाधिकरणवृत्तिमद्धूमवान् पर्वत इत्येतादृशमपि ज्ञानं हेतुरुपेयते, अन्यथा धूमत्वत्वादिविषयतायाः कारणतावच्छेदककुक्षौ प्रवेशे गौरवात्, सामानाधिकरण्यप्रकारकत्वापेक्षया समानाधिकरणवृत्तिप्रकारकत्वस्य गुरुत्वेपि सामान्यप्रत्यासत्त्यसत्त्वे विशिष्टपरामर्शनिर्वाहानुरोधेन तेन रूपेण हेतुताया अवश्योपगमात् ।

( केचित्तु– धूमव्यापकवह्निसमानाधिकरणधूमीयवद्धूमवान् पर्वत इत्याकारकज्ञानमेवाऽनुमितिहेतुः, यथाश्रुतस्य हेतुतावच्छेदकावच्छिन्ने साध्यसामानाधिकरण्याभावरूपस्य विरोधस्य हेत्वाभासत्वेन धूमीयत्वेनैव धूमत्वप्रवेशेन च लाघवसत्त्वात्; तथाच विशिष्याधेयतासम्बन्धेन धूमप्रकारतानिरूपितधूमत्वप्रकारतानिरूपितधूमप्रकारतानिरूपकनिश्चयत्वेनैव हेतुत्वम्, तेन द्रव्यत्वादिव्युदास इत्याहुः । )

**आद्या** — हेतुतावच्छेदकधर्मसहितसाध्यसामानाधिकरण्यरूपा । **भिन्ने** ति । प्रतिधूमादिकमित्यादिः । **द्वितीया** – साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपा । **अभिन्ना**– सर्वधूमादिसाधारणी अनुगतरूपावच्छिन्ननानाव्यक्तिदण्डादिविशिष्टहेतुकस्थलेपि परम्परासम्बद्धदण्डत्वाद्यखण्डधर्म एव हेतुतावच्छेदकतयोपगन्तव्य इति भावः । यद्यपि साध्यसामानाधिकरण्यावच्छेदकरूपवक्ष्यमाणव्यासद्याभिप्रायेणापि **एकैवही** त्यादिग्रन्थः सङ्गच्छते, तथापि स्वयं तत्र स्वरूपसम्बन्धरूपावच्छेद-

[दी] अयं 'कपिसंयोग्यतद्वृक्षत्वा' दित्यादिसङ्ग्रहायाऽसमा नाधिकरणान्तम् ।

---

कत्वप्रवेशनस्य खण्डनीयतया स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वरूपपारिभाषिकावच्छेदकत्वस्यैव विवक्षणीयतया एतदपेक्षया तादृशी व्याप्तिर्गुरुशरीरेति कथंचिदीदृशव्याप्तेरैक्योपपत्तिसम्भवेन तज्ज्ञानमनुमितिहेतुरित्येतादृशव्याप्तेरैक्यमुपपादितम् ।

मिश्रादिमतमवलम्ब्य प्रतियोग्यसमानाधिकरणपदप्रयोजनमाह – **अयं कपिसंयोगीति** ।

अथैतद्वृक्षत्वादेरव्याप्यंवृत्तिकपिसंयोगादिव्याप्यत्वोपगमेपि संयोगाद्यनवच्छेदकमूलादेः पक्षतावच्छेदकत्वे तदवच्छेदेनापि एतद्वृक्षादौ कपिसंयोगादेः सिद्धिप्रसङ्गः; नचेष्टापत्तिः; सल्लिंगपरामर्शस्य भ्रमानुमित्यजनकत्वनियमात्. नच तदवच्छेदेन हेतुमत्ताज्ञानस्य तदवच्छेदेन साध्यानुमितिहेतुत्वादेतद्वृक्षत्वादिरूपव्याप्यवृत्तिहेतोश्च किञ्चिदवच्छेदेनावृत्तेर्नातिप्रसङ्ग इति वाच्यम्; यदि स्वरूपसम्बन्धरूपावच्छेदकत्वावगाहिन्यामनुमितावपि तादृशहेतुमत्ताज्ञानत्वेन हेतुत्वमुपेयते ? तदापि तुल्ययुक्त्या एतद्वृक्षत्वादेरिव मूलाद्यवच्छिन्नसंयोगादिविशेषस्यापि कपिसंयोगादिव्याप्यतया तेन हेतुना मूलाद्यवच्छेदेन कपिसंयोगाद्यनुमितेर्निष्प्रत्यूहत्वादिति चेत्;

अत्रोपाध्यायाः;– साध्यस्य पक्षतावच्छेदकसामानाधिकरण्यं विना व्याप्यस्य पक्षधर्मत्वमनुपपन्नमिति पक्षधर्मताबलात्पक्षतावच्छेदकसामानाधिकरण्यमेव साध्ये सिद्ध्यति, न तु तदवच्छेद्यत्वमपि, प्रमाणाभावादिति तादृशानुमितेरप्रामाणिकतया तत्र परामर्शहेतुताकल्पनमेव नास्तीति न तदापत्तिरिति समादधिरे ।

[दी] यत्तु– 'इदं संयोगि द्रव्यत्वा' दित्यादावव्याप्तिवारणाय तत्, संयोगस्य शाखाद्यवच्छेदेन वृत्तेः, वृक्षत्वावच्छेदेन सामान्याभाववृत्तौ बाधकाभावात् तत्र च अतीन्द्रियस्यापि संयोगस्य सत्त्वात्परितः

---

मिश्रादयस्तु – बाधानवतारे मूलाद्यवच्छेदेन कपिसंयोगादिसिद्धिरिष्टैवेति वदन्ति । एतत्तत्त्वं ग्रन्थकृता हेत्वाभासे वक्ष्यते ।

प्राचीनसिद्धव्यावृत्तिस्थलं दूषयितुमुपन्यस्यति – **यत्त्वि** ति । **तत्** – असमानाधिकरणान्तम् । ननु द्रव्ये संयोगत्वावच्छिन्नाभावसत्त्व एव अवच्छेदकगर्भोक्तलक्षणाव्याप्तिः प्रसज्यते, तदेव न; वृक्षादौ संयोगानवच्छेदकभागाप्रसिद्ध्या तत्सामान्याभावावच्छेदकस्य दुर्लभत्वादित्यत आह—**संयोगस्ये** ति । **वृक्षत्वावच्छेदेने** ति । वृक्षत्वादेः प्रत्येकं सकलसंयोगातिप्रसक्तत्वात्, तस्य संयोगावच्छेदकत्वासम्भवात्, आकाशादिसंयोगस्यापि यावद्वृक्षवृत्तेरेकस्याभावाद्वृक्षत्वे तत्संयोगानतिप्रसक्तत्वासम्भवादिति भावः ।

ननु वृक्षत्वावच्छेदेन वृक्षादौ संयोगसामान्याभावसत्त्वे वृक्षे संयोगो नास्तीत्यादिप्रत्यक्षापत्तिरित्यत आह—**तत्रचे** ति । **अतीन्द्रियस्ये** ति । अतीन्द्रियप्रतियोगितया संयोगसामान्याभावस्याऽतीन्द्रियत्वमिति भावः ।

ननु संयोगसामान्याभावस्य वृक्षे सत्त्वे महत्त्वोद्भूतरूपवन्मात्रसमवेतसंयोगसामान्याभावोप्यावश्यकः, तद्व्याप्यधर्मावच्छिन्नाभावस्य तद्धर्मावच्छिन्नाभावनियतत्वादिति योग्यमात्रप्रतियोगिकोयमभावः कथं न वृक्षे साक्षात्क्रियत इत्यत आह—**परित** इति । यद्वा प्रतियोगितावच्छेदकयोग्यत्वस्य तन्त्रत्वेत्वाह—**परित** इति । प्रतियोग्युपलब्धेर्विभिन्नावच्छेदेन

[दी] प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादि नाध्यक्षमिति; तन्न; द्रव्ये संयोगसामान्याभावे मानाभावात् ।

---

अभावग्रहं प्रति विरोधिज्ञानमुद्रया प्रतिबन्धकत्वं न सम्भवतीति तस्य दोषत्वकथनं दोषविधया प्रतिबन्धकत्वलाभाय ।

अथ यत्र संयोगाविषयकमेव उपनीतभानाद्यात्मकं वृक्षादिरूपाधिकरणज्ञानं तदग्रिमक्षणे वृक्षादौ तादृशसंयोगसामान्याभावग्रहप्रसङ्गः, तादृशदोषस्य प्रागसत्त्वात्. एवं वृक्षे न संयोग इत्यादि लौकिकप्रत्यक्षस्याऽळीकतया तत्र तादृशप्रतिबन्धकत्वकल्पनमेवाऽशक्यमिति चेन्न; वृक्षादौ संयोगसामान्याभावलौकिकप्रत्यक्षस्याऽप्रसिद्धत्वेपि गुणादौ तत्प्रसिद्ध्याऽधिकरणीयविषयतासम्बन्धेनाऽभावलौकिकत्वावच्छिन्नं प्रति स्वविषयसंयोगवत्त्वसम्बन्धेन प्रत्यक्षत्वेन प्रतिबन्धकत्वकल्पनात्, सर्वत्र द्रव्येऽन्ततः ईश्वरीयप्रत्यक्षस्यैव सर्वदा तादृशसम्बन्धेन सत्त्वेनाऽतिप्रसङ्गविरहात् ।

इदमापाततः ;— द्रव्यरूपाधिकरणविषयकसंयोगाभावविषयकप्रत्यक्षस्य कदाचिदप्यनुदयेन तादृशप्रत्यक्षसामग्र्या एवाऽकल्पनेन आपादकाभावादेवाऽतिप्रसङ्गवारणसम्भवेन तादृशप्रतिबन्धकताकल्पनस्यायुक्तत्वात्; कथंचिदापत्तिसम्भवेपि तादात्म्यसम्बन्धेन द्रव्यत्वेनैव तादृशसम्बन्धेन संयोगाभावलौकिकप्रत्यक्षं प्रति प्रतिबन्धकत्वौचित्यात् ।

**मानाभावा** दिति । लौकिकप्रत्यक्षस्य योग्यानुपलब्धिविरहेणाऽसम्भवादुपनीतभानस्य संयोगाभावो वृक्षावृत्तिरित्याकारकाविपरीतविषयकस्याप्युपनयवशेनकल्पनसम्भवात् विनिगमनाविरहेणैकतरस्य प्रामाण्यासिद्धेः, शब्दस्याऽऽप्तोक्तत्वासिद्ध्या तदव्यवस्थापकत्वात्, अनुमानस्य च लिङ्गाभावेनाऽसम्भवादितिभावः । ननु वृक्षादौ यावत्संयोगविशेषाभावानामुभयसिद्धतया तत

[दी] नच यो यदीययावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तेः

---

एव हेतोस्तत्राप्रत्यक्षस्यापि तत्सामान्याभावस्य सिद्धिर्निष्प्रत्यूहैवेति शङ्कां निरस्यति – **नचे** त्यादिना । यः संयोगीययावद्विशेषाभाववान् स संयोगसामान्याभाववानिति व्याप्तेरेवाऽग्रे व्यर्थविशेषणत्वाप्रयोजकत्वादि दोषेण निराकरणीयतया प्रथमतस्सामान्यमुखीं व्याप्तिं अनुमानोपष्टम्भकतया दर्शयति—**यो यदीये** ति । यद्धर्माश्रयस्य यावद्विशेषा भाववान् य स्स तद्धर्मावच्छिन्नाभाववानित्यर्थः । संयोगत्वाश्रयस्य विशेषधर्मावच्छिन्नाभावकूटं वृक्षादौ वर्तत इति तत्रोक्तव्याप्तेस्संयोगत्वा वच्छिन्नाभावसिद्धिः । प्रतियोगिनोर्यत्त्वतत्त्वेन निवेशे संयोगवृत्ति कपिसंयोगत्वादिरूपसामान्यधर्मावच्छिन्नाभावमादाय सिद्धसाधनं स्यादिति धर्मस्य यत्त्वतत्त्वेनोपादानम् । संयोगादिसम्बन्धावच्छिन्नसंयोगत्वावच्छिन्नाभावमादाय सिद्धसाधनवारणाय समवायसम्बन्धावच्छिन्नाभाव एव साधनीयः; अन्यसम्बन्धावच्छिन्नविशेषाभावकूटस्य तत्सम्बन्धावच्छिन्न सामान्याभावव्यभिचारित्वे समवायसम्बन्धावच्छिन्नविशेषाभावकूटस्यापि तत्सम्बन्धावच्छिन्नसामान्याभावव्यभिचारित्वं तुल्यन्यायेन सम्भाव्येतेति प्रतियोगितावच्छेदकसम्बन्धानामपि यत्त्वतत्त्वेन व्याप्तावन्तर्भावः; अत एव समवायसम्बन्धावच्छिन्नयावद्विशेषाभावहेतुना तत्सम्बन्धावच्छिन्न संयोगसामान्याभावसिद्धिः । यद्धर्माश्रयविशेषाभावश्च उभयावृत्तियद्धर्म समानाधिकरणधर्मावच्छिन्नाभावः; अतस्संयोगत्वाद्यपेक्षया वृक्षवृत्तिसंयोगत्वादेर्विशेषधर्मत्वेपि संयोगसामान्याभावं वृक्षादावनभ्युपगच्छतामवयव विशेषरूपावच्छेदकदुर्भिक्षेण वृक्षवृत्तिसंयोगत्वावच्छिन्नाभावस्य वृक्षादाव नभ्युपगमेपि च न सान्दिग्धासिद्धिः, वृक्षवृत्तिसंयोगत्वादीनामुभयवृत्तित्वेन तदवच्छिन्नाभावव्यावृत्तेः । नच हेतावुभयावृत्तित्वविशेषणस्याऽसिद्धि-

वारकत्वेपि व्यभिचाराऽवारकतया वैयर्थ्यम्. यावत्त्वस्य धीविशेषविष यत्वरूपस्य परिचायकमेव तादृशधर्मावच्छिन्नप्रतियोगिताकत्वम् , न तु हेतुप्रविष्टमिति तु न सत् , तथा सति यत्तत्पदार्थस्य हेतुसाध्यशरीरा प्रवेशेन सामान्यव्याप्तित्वानुपपत्तेरिति वाच्यम् , यावत्पदस्य व्यापक त्वार्थकतया तद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावत्वनिरूपिता आधेयत्वसम्बन्धावच्छिन्नव्यापकताया एव हेतुतया विशेषधर्मव्यापकत्वा घटकाभावान्तरस्यैव च सामान्यधर्मव्यापकताघटकतया वैयर्थ्यानवकाशात् । नच तादृशाभावत्वव्यापकत्वं तादृशाभावत्ववन्निष्ठभेदप्रतियोगितायामाधेयता सम्बन्धेनानवच्छेदकत्वम् , एवंच संयोगविशेषाभावानां सर्वेषामेव सर्वा धिकरणवृत्तितया तन्निष्ठभेदप्रतियोगितायां आधेयतासम्बन्धेनावच्छेदक मधिकरणमप्रसिद्धमिति तदनवच्छेदकत्वरूपहेत्वप्रसिद्धिरिति वाच्यम् , आधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन प्रतियोगिताया अभावस्यैव प्रतियोगितानवच्छेदकत्वस्थाने निवेशनीयत्वात् , उक्तस्थले व्यधिकर णतादृशसम्बन्धावच्छिन्नाभावप्रसिद्धिसौलभ्यात् । यद्धर्मसमानाधिकरणेत्यत्र प्रतियोगितावच्छेदकत्वेन धर्मो विशेषणीयः; तेन कम्बुग्रीवादिमत्त्वादि व्याप्यधर्मावच्छिन्नप्रतियोगिताकयावदभाववतः तद्धर्मावच्छिन्नाभावाप्रसि- द्ध्या तादृशाभाववत्त्वासम्भवेपि न क्षतिः । नच भेदप्रतियोगिताव च्छेदकवाच्यत्वघटाद्यन्यतरत्वादिव्याप्यधर्मावच्छिन्नसंयोगादिसम्बन्धावच्छि न्नप्रतियोगिताकयावदभाववतः तद्रूपावच्छिन्नप्रतियोगिताकाभाववत्त्वासम्भ वात् व्यभिचारः, वाच्यत्वादेः संयोगादिनाऽवृत्तित्वात्तेन सम्बन्धेन घटादेरेव तादृशाभावविरोधितया घटत्वादेरेव तत्प्रतियोगितावच्छेदकत्व सम्भवेन गुरोरन्यतरत्वस्य तत्प्रतियोगितानवच्छेदकत्वादिति वाच्यम्; वाच्यत्वादिसाधारणस्याऽन्यतरनिष्ठप्रतियोगित्वस्य न्यूनवृत्तिघटत्वादिना ऽनवच्छेदात् , अगत्या गुरुणाऽन्यतरत्वादिनैव तदवच्छेदात् । वस्तुतो

यत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य साध्यहेतुघटकता तत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वेनैव सामान्यधर्मस्य विशेषणीयतया उक्तसामान्यधर्मस्य भेदप्रतियोगितावच्छेदकत्वेपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकतया तत्सम्बन्धावच्छिन्नतदवच्छिन्नाभावाऽप्रसिद्धावपि न व्यभिचारः; अत एव भेदप्रतियोगितावच्छेदकजातित्वादिघटकनित्यत्वादेस्समवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकगर्भे निवेशस्य गौरवेणाऽसम्भवेपि न जातित्वादिसामान्यधर्मघटितहेतौर्व्यभिचारितया सामान्यव्याप्तिभङ्गः ।

वस्तुतस्तु ; – यद्धर्मे प्रतियोगितावच्छेदकत्वविशेषणमनुपादेयमेव, कम्बुग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावनिष्ठभेदप्रतियोगितात्वस्य घटत्वादिघटिततादृशधर्मापेक्षया गुरुतया तदवच्छिन्नाभावरूपव्यापकत्वाप्रसिद्धेः यद्धर्म इत्यनेन कम्बुग्रीवादिमत्त्वरूपगुरुधर्मोपादानस्य गुरुधर्मस्याऽभावप्रतियोगितानवच्छेदकत्वपक्षेऽसम्भवेन व्यभिचारानवकाशात् । अभावे यावत्त्वादिविशेषणप्रवेशाद्यत्किंचिज्जात्यादिव्यक्त्यभाववति जात्यादिसामान्याभावासत्त्वेपि न सामान्यव्याप्तिभङ्गः । यद्यपि यत्तदर्थघटितसाध्यहेतूनामननुगमेन नैका व्याप्तिरिति संयोगसामान्याभावतदीयविशेषाभावकूटयोर्व्याप्तौ यावत्त्वादिविशेषणवैयर्थ्यमेव, तथापि तद्दोषस्य स्वयमग्रे वाच्यतया यथाकथंचिच्छङ्कासङ्गतिः ।

अथ वृक्षादौ यावत्संयोगाभाववत्त्वमुभयवाद्यसिद्धम् , तत्र विभुसंयोगाभावावच्छेदकस्य अवयवविशेषस्य दिग्विशेषस्य वा दुर्वचत्वात् , ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वे कालविशेषावच्छेदेनापि तत्र तदभावासम्भवात् ; तयोस्तदविरोधितामते द्रव्ये संयोगसामान्याभावस्याद्युत्पत्तिकालावच्छेदेन वृत्तावविरोधात् । नच मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनां भेदादग्रमूलाद्यवच्छेदेनाऽभावस्सुलभ इति वाच्यम् ;

तासां भेदस्याऽप्रामाणिकत्वात् । नच नानावयवावच्छिन्नसंयोगव्यक्ती नामभेदे तत्तत्संयोगव्यक्तौ तत्तदवच्छेदकव्यक्तीनां तादात्म्यसम्बन्धेन कारणतायां व्यभिचार इत्यवच्छेदकभेदेन संयोगभेद अवश्यकः, आवश्यकश्चाऽवच्छेदकव्यक्तीनां विशिष्य स्वावच्छिन्नसंयोगव्यक्तिषु हेतुताभ्युपगमः ; अन्यथा मूलादिमात्रावच्छिन्नमूर्तान्तरसंयोगानामग्राद्यवच्छेदेनैतद्वृक्षादिवृत्तिविभुसंयोगानां च वृक्षान्तरावयवावच्छेदेनाऽनुत्पत्तिप्रयोजकस्य दुर्लभत्वापातादिति वाच्यम् ; व्याप्यवृत्तेरवच्छेदकानभ्युपगमेन वृक्षादौ विभुसंयोगस्य व्याप्यवृत्तितया मूलाद्यवच्छिन्नत्वविरहेण तत्र मूलादीनां हेतुताविरहात् . व्याप्यवृत्तेरवच्छेदकोपगमे तत्तदवच्छेदकस्वरूपतत्तन्निष्ठावच्छेदकताव्यक्तीनामेव तत्तदवच्छेदकस्य जन्यतावच्छेदकसम्बन्धतया मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनामभेदेपि व्यभिचारानवकाशात् ; अन्यथा मूलाद्यवच्छिन्नसंयोगस्य दिग्विशेषैरप्यवच्छिन्नतया तत्राऽवच्छेदकतासम्बन्धेन तत्तत्संयोगव्यक्तीनामुत्पत्त्या मूलादेस्तत्र व्यभिचारस्य दुर्वारत्वात् । नच मूलावच्छिन्नसंयोगानामग्रावच्छिन्नसंयोगादेरिव प्राच्याद्यवच्छिन्नसंयोगादेरपि भेदः स्वीकर्तुं शक्यते, मूले प्राच्यां शरीरवृक्षसंयोग इत्यादिप्रतीत्या एकसंयोगव्यक्तावेव मूलप्राच्याद्यवच्छिन्नत्वावगाहनात् . नचाऽग्रमूलयोश्शरीरसंयोग इत्यस्या इव तादृशप्रतीतेरपि संयोगद्वयावगाहित्वमस्मदनुमतमिति वाच्यम् ; यत्र मूलप्रतीचीमात्रावच्छिन्न एक श्शरीरसंयोगः अग्रप्राचीमात्रावच्छिन्नश्च शरीरान्तरसंयोगः तत्र मूले प्राच्यां शरीरसंयोग इति प्रत्ययापत्तेः, शरीरतरुसंयोगव्यक्तीनां एकैकासामेव शरीरावयवेन वृक्षावयवेन च अवच्छिन्नतया व्यभिचारस्यापि दर्शितसम्बन्धसङ्कोचमन्तरेण दुर्वारत्वाच्च । न हि तत्र शरीरावयवावच्छिन्नशरीरतरुसंयोगमूलावच्छिन्नतदुभयसंयोगयोः भेदसम्भवः, तथा सति मूलावच्छिन्नवृक्षसंयोगस्य शरीरे चरणावच्छिन्न शरीरसंयोगस्य वृक्षे व्याप्यवृत्तितया तत्र तदभावासत्त्वप्रसङ्गात् ।

तत्तदवच्छेदकावच्छिन्ननानासंयोगसाधारणं तत्तदवच्छेदकावच्छिन्नत्वमेव तत्तदवच्छेदकजन्यतावच्छेदकम्, न तु संयोगनिष्ठतत्तद्व्यक्तित्वम्, अनन्तकार्यकारणभावप्रसङ्गात्; तथाचैकावच्छेदकावच्छिन्नसंयोगस्य अपरावच्छेदकावच्छिन्नत्वेपि तदवच्छिन्नत्वविशिष्टस्य नान्यत्रोत्पत्तिरिति न व्यभिचारशङ्केत्यपि वदन्ति ।

यत्तु- संयोगमात्रस्याऽव्याप्यवृत्तितासिद्धान्तानुरोधेन मूलाग्रावच्छिन्नतरुविभुसंयोगादीनां भेदस्वीकार आवश्यक इति; तदपि न सम्यक्; तादृशसंयोगव्यक्तीनां गगनादौ दिग्विशेषरूपावच्छेदकनियमेनैव तादृशसिद्धान्तसङ्गतेः ।

अत्र वदन्ति;—

द्रव्यमात्र एव संयोगसामान्याभावस्याऽप्रामाणिकतायाः **तन्ने** त्यादिनोक्तेः **नचे** त्यादिना गगनादेरेव संयोगसामान्याभावसाधकमनुमानमाशङ्कितम्, विभुद्वयसंयोगानभ्युपगमेन तत्र यावत्संयोगव्यक्तीनामेव प्रतिनियतदिग्विशेषावच्छिन्नतया तत्तद्व्यक्तित्वेन तत्र तदभावसत्त्वेऽविवादात् नाऽसिद्ध्यवकाशः, विभुमात्रे संयोगसामान्याभावसिद्धावपि संयोगि द्रव्यत्वादित्यादौ व्यावृत्तिसङ्गतेः. वृक्षादावेतद्व्याप्तिबलात्संयोगसामान्याभावाऽसिद्धावपि न क्षतिः, प्रतियोग्यनवच्छेदकस्य तदभावावच्छेदकत्वनियमसत्त्वे वृक्षत्वावच्छेदेन वृक्षादावपि संयोगसामान्याभावसिद्धेस्सम्भवेन तत्रापि तदभावं साधयतां तादृशनियमवादिनामाशङ्कां **नच प्रतियोग्यनवच्छेदकवृक्षत्वादेरभावावच्छेदकत्व** मित्यादिना निराकरिष्यति; पूर्वमपि वृक्षत्वावच्छेदेन संयोगसामान्याभाववृत्तिरविरोधमात्रेण प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वनियमेन वा सेद्धुमर्हतीत्याशयेनैव वृक्षादौ संयोगतत्सामान्याभावयोर्वृत्तावच्छेदकभेद उपपादितः, न तु "यो यदीये" त्यादिनियमस्य तत्साधकत्वाशयेनेति न सन्दर्भविरोध इति ।

[दी] यावत्संयोगाभावा एव मानम् , यत्तदर्थयोरननुगमात् ;

---

यत्र यत्किञ्चिदवयवनाशान्महावृक्षनाशानन्तरं खण्डवृक्षोत्पत्तिस्तत्क्षणे पूर्वोत्पन्नक्रियातोऽवशिष्टयावत्तदवयवैर्गगनादिसंयोगानां विनाशः, द्वितीयक्षणे च खण्डवृक्षस्यापरावयवनाशः, तृतीयक्षणे च तन्नाशः, तत्र वृक्षे विभुसंयोगानुत्पत्त्या यावद्विशेषाभावसौलभ्यम् । नचैवं तादृशवृक्षे मूर्तान्तरेणापि संयोगस्तदवयवसंयोगैस्तत्तत्कर्मणा वा न सम्भवति, तदवयवगगनादिसंयोगनाशककर्मणा मूर्तान्तरतदवयवसंयोगानामपि तदुत्पत्तिकाले विनाशात् ; अवयवावयविनोस्संयोगानभ्युपगमेन स्वावयवद्वयसंयोगेन संयोगजननासम्भवात् ; उत्पत्तिकाले च द्रव्ये गुणवत्कर्मसत्त्वानुपपत्तेरिति संयोगसाध्यके द्रव्यत्वस्य सद्धेतुतैव न निर्वहतीति वाच्यम् ; तादृशखण्डद्रव्ये तदवयवसंयोगजन्यस्य तत्कर्मजन्यस्य च संयोगस्याऽसम्भवेपि सर्वत्रैव सदागतिशीलपवनादिपरमाणूनां कर्मभिस्तत्संयोगानामुत्पत्तौ बाधकविरहेण द्रव्यस्य संयुक्तत्वनियमादित्यपि केचित् ।

**यावत्संयोगाभावा एव मान** मिति । ज्ञायमानलिङ्गस्याऽनुमितिकरणत्वमताभिप्रायेण । **यत्तदर्थयो** रिति । साध्यहेतुघटकयत्तच्छब्दार्थयोस्संयोगत्वघटत्वाद्योरित्यर्थः । **अननुगमा** दिति । एकरूपेण निवेशासम्भवादित्यर्थः । एकव्याप्तेर्निर्वाहयितुमशक्यत्वादिति शेषः ; तथाच घटत्वाद्यवच्छिन्नाभावघटादिविशेषाभावकूटयोर्व्याप्तेस्संयोगसमान्याभावसिद्धावनुपयोगित्वाद्यावत्संयोगविशेषाभावे संयोगसामान्याभावप्रविशेषव्याप्तेश्चाऽग्रे निराकर्तव्यत्वात् नोक्तानुमानसम्भव इति भावः ।

ननु प्रकृतहेतौ प्रकृतसाध्यव्याप्तेरग्रहेपि यथा यो यत्र प्रवर्तते स कार्यतया तज्ज्ञानानित्याकारात् स्तन्यपानादिप्रवृत्तितद्विषयककार्यताज्ञानयोर्व्याप्तिग्रहाद्गवानयनादिप्रवृत्तिलिङ्गेन गवानयनादिकार्यताज्ञानस्य

[दी] एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च ।

सिद्धिः, तथा प्रकृते संयोगीययावद्विशेषाभावे तत्सामान्याभावव्याप्तेः व्यर्थविशेषणत्वादिना अग्रहेपि घटादिविशेषाभावकूटे तत्सामान्याभाव व्याप्तिग्रहादेव संयोगीययावद्विशेषाभावे पक्षधर्मताज्ञानाद्गगनादौ संयोग सामान्याभावसिद्धिर्दुर्वारैव, व्यतिरेकिहेतुकानुमिताविव सामान्यव्याप्त्य धीनविशेषसिद्धौ व्याप्तिविशिष्टपक्षधर्मताज्ञानस्य हेतुत्वानुपगमात्. नच विशेषाभावान्तरे सामान्याभावान्तरव्याप्तिग्रहात्संयोगविशेषाभावेन सामान्या भावसिध्द्युपगमे यावत्त्वाद्यविशेषितकपिसंयोगप्रतियोगिकाभावे कपिसंयो- गादिसामान्याभावादिव्याप्तिग्रहादेव संयोगादिप्रतियोगिकाभावेन तत्सा- मान्याभावसिद्धिसम्भवाद्यावत्त्वादिविशेषणमनर्थकम्, प्रकृतहेतुतुल्यनिखिल हेत्वन्तरेषु *(तत्प्रविष्टतत्तत्पदार्थघटित)प्रकृतसाध्यतुल्यसाध्यव्याप्तिग्रहापेक्षा- यास्स्वीकर्तुमशक्यत्वात्, तादृशसकलहेतुसाध्यानां युगसहस्रेणाप्यसर्वज्ञैर्ज्ञातु मशक्यत्वादिति वाच्यम्; उपस्थितयावत्तादृशहेतुषु तादृशतत्तत्साध्य व्याप्तिग्रहापेक्षया सामञ्जस्यात्, तावन्मात्रापेक्षायाश्च तत्तत्साधनधर्मिक तत्तत्साध्यव्याप्तिग्रहाभावविशिष्टतत्तत्साध्यसाधनोपस्थितेरनुमितिप्रतिबन्धकत या सूपपादत्वात्. एवं सति यावत्त्वविशेषणानुपादाने जात्यादिविशेषघट त्वाद्यभावे जात्यादिसामान्याभावव्यभिचारोपस्थितिदशायां संयोगादि सामान्याभावसाधनासम्भवेन तादृशविशेषणसार्थक्यात्, गगनाद्यवृत्तित्वसमा नाधिकरणनिरुक्तधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावकं यद्यत्स्वं तदन्यो यो धर्मः स तन्निष्ठाभावप्रतियोगितावच्छेदक इत्येतादृशोक्तसामान्यव्याप्ति स्थलाभिषिक्तव्याप्त्यैव वा संयोगत्वादौ गगनादिनिष्ठाभावप्रतियोगिता वच्छेदकत्वं साधनीयम्, तत्र च नाऽननुगमो दोष इत्याशङ्क्य उक्तानुमाने उपाधिमाह—एकावच्छेदेने ति । अनवच्छिन्नतदीययाव-

* कुण्डलितग्रन्थो ऽधिक इव ।

द्विशेषाभावाधिकरणत्वस्य उपाधित्वादित्यर्थः, यथाश्रुते गुणादिनिष्ठाया यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तितया अवच्छेदकविरहेण उपाधेस्साध्यव्यापकत्वानिर्वाहात् । नच गुणादिनिष्ठाया यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तित्वेपि गुणत्वाद्यवच्छिन्नत्वमावश्यकम्, अन्यथा अधिकरणतावच्छेदकप्रकारकज्ञानासम्भवेन गुणादौ तदभावग्रहासम्भवादिति वाच्यम्, द्रव्यनिष्ठयावत्संयोगाभावाधिकरणताया अपि द्रव्यत्वादिरूपैकावच्छेदकावच्छिन्नतया उपाधेस्साधनाव्यापकतानिर्वाहाय सप्तमीनिर्देश्यं यदव्याप्यवृत्तितानिर्वाहकं विलक्षणमवच्छेद्यत्वं तस्यैव विवक्षणीयतया गुणादिनिष्ठसंयोगाद्यभावाधिकरणतायां तादृशावच्छेद्यत्वविरहेण साध्यव्यापकताया यथाश्रुते दुरुपपादत्वात् ।

अथैवं कपिसंयोगसामान्यस्य मूलाद्यवच्छेदेनाभाववति कपिसंयोगादिमद्वृक्षादौ अनवच्छिन्नतदीययावद्विशेषाभाववत्त्वविरहेण साध्योपाध्योर्न सामान्यव्याप्तिनिर्वाहः. अत्र केचित्;— अवच्छिन्नत्वैकावच्छेदकानवच्छिन्नत्वोभयाभाववद्यावद्विशेषाभाववत्त्वमिहोपाधित्वेनाभिमतम्, गुणे यावद्विशेषाभाववत्त्वमवच्छिन्नत्वाभावेनोक्तोभयाभाववत्, कपिसंयोगवति वृक्षे कपिसंयोगीययावद्विशेषाभाववत्त्वं मूलाद्येकावच्छेदकावच्छिन्नमिति तदनवच्छिन्नत्वाभावादुभयाभाववत् इति नोक्तोपाधिसाध्ययोस्सामान्यव्याप्तिभङ्गः. अथ वृक्षादिनिष्ठानां यावत्कपिसंयोगविशेषाभावाधिकरणतानां नैकावच्छेदकावच्छिन्नत्वं सम्भवति, वृक्षाद्यवृत्तिकपिसंयोगादिव्यक्तीनां ये अभावाः तेषां वृक्षादौ व्याप्यवृत्तितया तन्निष्ठतदधिकरणतानामनवच्छिन्नत्वात्; नच व्याप्यवृत्त्यधिकरणतानां अनवच्छिन्नतया अन्यासां चैकावच्छेदकावच्छिन्नतया सर्वास्वेव तासु उभयाभावोऽक्षत इति वाच्यम्, एवं सति पक्षनिष्ठसंयोगव्यक्तीनां दिग्देशविशेषाद्यवच्छिन्नानां यावन्तोऽभावाः पक्षनिष्ठतावन्निरूपिताधिकरणतानां सर्वासामेकावच्छेदक-

विरहेपि द्वित्रादीनां अवच्छेदकैक्यसम्भवेन सर्वास्वेव तासु तादृश तादृशावच्छेदकमादायैकावच्छेदकावच्छिन्नत्वं सम्भवतीत्युभयाभावसत्त्वा त्तद्वृत्तिसंयोगव्यक्तीनां ये ऽभावाः तेषां तन्निष्ठाधिकरणतासुचानवच्छिन्न तया उभयाभावसत्त्वादुक्तोपाधेः यावत्संयोगाभावरूपसाधनव्यापकतापत्तेः; स्वसमानाधिकरणयावत्तदभावाधिकरणतावच्छेदकावच्छिन्नत्वस्य उभया-भावघटकैकावच्छेदकावच्छिन्नत्वरूपत्वे च वृक्षादिनिष्ठमूलाद्यवच्छिन्नकपि संयोगाद्यभावाधिकरणतास्वपि न तथात्वसम्भवः, तत्समानाधिकरणव्याप्य वृत्तिकपिसंयोगाभावाद्यधिकरणतानामपि तादृशयावदधिकरणतान्तर्गतत्वा त्तदवच्छेदकस्यचाऽप्रसिद्धत्वादिति चेन्न; एकावच्छेदकावच्छिन्नत्वस्य स्वसमानाधिकरणाकिञ्चिदवच्छिन्नयावत्तदभावाधिकरणतावच्छेदकावच्छिन्न-त्वरूपस्य विवक्षितत्वेनानवच्छिन्नाधिकरणताभिस्सहावच्छिन्नाधिकरणताना मेकावच्छेदकावच्छिन्नत्वासम्भवेपि क्षतिविरहात्. अथ वा यावद्विशेषा भाववत्त्वमित्यनेन यावत्तदीयविशेषाभाववत्त्वावच्छिन्ननिरूपितमेकाधिकर-णत्वं विवक्षितम्, न तु तत्समुदायः; एकावच्छिन्नत्वं च एकमात्रवृत्ति धर्मावच्छिन्नावच्छेदकावच्छिन्नत्वम्, नत्वभिन्नावच्छेदककत्वम्, वृक्षा वृत्तिकपिसंयोगानां वृक्षनिष्ठाभावा यद्यपि व्याप्यवृत्तयः, तथापि अव्याप्य वृत्तिसाधारणयावत्त्वेन तेषामव्याप्यवृत्तित्वात्तत्साधारणयावत्त्वावच्छिन्ननिरू-पिताधिकरणता एकमात्रवृत्तितत्तन्मूलत्वाद्यवच्छिन्नतत्तन्मूलादिरूपावयवा वच्छिन्नेति तत्रोभयाभावोऽक्षत इति न साध्योपाध्योस्सामान्यव्याप्ति भङ्गः। पक्षनिष्ठसंयोगसामान्यीययावद्विशेषाभावाधिकरणता च न प्रत्येका वच्छेदकावच्छिन्ना, अस्यां दिशि गगने न संयोग इत्यादिप्रतीति विरहात्; अपि तु यत्किंचिदनुगतधर्मावच्छिन्नतदवच्छेदकावच्छिन्ना, याव त्संयोगाभाववद्गगनमिति प्रत्ययात्, एकरूपावच्छिन्नस्य प्रतियोग्यभावा-धिकरणतावच्छेदकत्वे विरोधात्, एकस्यापि विशेषरूपसामान्यरूपाभ्यां उभयावच्छेदकत्वोपगमात्; तथाच पक्षनिष्ठसंयोगविशेषाभावानां याव-

त्त्वावच्छिन्ननिरूपिताधिकरणता न निरुक्तैकावच्छेदकावच्छिन्नत्ववतीति तस्योक्तोभयवत्त्वादुपाधेस्साधनाव्यापकत्वमिति वदन्ति ।

वस्तुतस्तु; अनवच्छिन्नयावद्विशेषाभाववत्त्वमुपाधिः, तादृशोपाधिना साध्यस्य सामान्यव्याप्तिविरहेपि संयोगसामान्याभावरूपपर्यवसितसाध्य व्यापकतया तादृशोपाधेस्सत्प्रतिपक्षोत्थापकत्वमव्याहतम् , तादात्म्येन साध्यवतोप्युपाधिव्याप्यतया तादृशोपाध्यभावेन संयोगसामान्याभावरूप साध्यवद्भेदोऽन्यत्राप्रसिद्धोपि साधयितुं शक्यत एव, अभावसाध्यक व्यतिरेकिणि प्रतियोगिमात्रप्रसिद्धेरपेक्षितत्वात् ; उपाध्यभावेन साध्या भावसाधनं तु न सम्यक् , संयोगरूपस्य तस्य साधने सिद्धसाधनात् , पक्षावृत्त्युपाधिव्याप्यत्वेन साध्ये पक्षावृत्तित्वसाधनात् सत्प्रतिपक्ष निर्वाहात् इति केचित ।

सिद्धसाधनादितः साध्याभावसाधनसम्भवेपि प्रतियोगिवैयधि करण्याघटितसाध्यव्यापकतावच्छेदकतया गृह्यमाणोपाधितावच्छेदकावच्छि न्नाभाववत्ताज्ञानात् पक्षे साध्यानुमितिप्रतिरोध इति सारम् ।

अथ वा प्रतियोग्यनधिकरणत्वरूपपक्षधर्मावच्छिन्नसामान्याभावरूप साध्यव्यापकतया **एकावच्छेदेने**त्यादेर्यथाश्रुतस्यैवोपाधितानिर्वाहः ; यत्र प्रतियोगिमति यस्य सामान्याभावः तत्र एकावच्छेदकावच्छेदेन तस्य यावद्विशेषाभाववत्त्वमिति सामान्यव्याप्तेः, कपिसंयोगादिमतः कपिसंयो- गादिसामान्याभावाधिकरणवृक्षादेरेकावच्छेदेन कपिसंयोगविशेषाभावकूटवत्त्व नियमेन सुग्रहत्वात् , गुणादावेकावच्छेदेन यावद्विशेषाभावासत्त्वेपि तत्र प्रतियोग्यसत्त्वेनावच्छिन्नसाध्यव्यापकत्वाक्षतेश्च । द्रव्ये च प्रतियोगिमत्त्व विशिष्टयावत्संयोगविशेषाभावाधिकरणे एकावच्छेदेन तदीययावद्विशेषा भावसत्त्वात् प्रतियोगिमत्त्वरूपावच्छेदकविशिष्टसाधनाव्यापकत्वं तस्य वृक्षादिवृत्तिकपिसंयोगादिविशेषाभावाधिकरणताकूटान्तर्गतकतिपयाभावाधि -

करणतानामनवच्छिन्नत्वेपि तत्कूटस्यैकावच्छेदकावच्छिन्नत्वं पूर्ववदुपपादनीयम् ।

अथैतादृशोपाधेर्व्यभिचारोन्नायकत्वं सत्प्रतिपक्षोन्नायकत्वं वा न सम्भवति, प्रकृतसाध्यव्यापकस्य एकावच्छेदकावच्छिन्नसंयोगीययावद्विशेषाभाववत्त्वस्याप्रसिद्धेः, द्रव्ये तदीययावद्विशेषाभाववत्त्वस्यावच्छिन्नत्वेपि एकावच्छेदकावच्छिन्नत्वाभावात्, गुणे च तस्यावच्छिन्नताया एवाभावात् प्रतियोगिमत्त्वविशिष्टकपिसंयोगादिसामान्याभावव्यापकस्य तदीयैकावच्छेदकावच्छिन्नयावद्विशेषाभाववत्त्वस्य प्रसिद्धत्वेपि तदभावेन प्रकृतसाध्यवद्भेदसाधनं तु न सम्भवति, तस्य प्रकृतसाध्याव्यापकत्वात् । प्रतियोगिमत्त्वविशिष्टकपिसंयोगादिसामान्याभाववद्भेदश्च कपिसंयोगादिरूपप्रतियोगिशून्ये हेतुमति साध्यमानो न कपिसंयोगादिसामान्याभाववद्भेदपर्यवसायी, प्रतियोगिमद्भेदस्याऽबाधात् . प्रतियोगिमति चैकावच्छेदकावच्छिन्नतदीययावद्विशेषाभावसत्त्वेन तद्वत्त्वाभवादिरूपहेतोरसिद्धिरिति न व्यभिचारोन्नयननिर्वाह इति;—

मैवम्; — क्वचिद्द्रव्ये जलादिसंयोगवति तत्सामान्याभावस्य सत्त्वे एकावच्छेदकावच्छिन्नतदीययावद्विशेषाभावसत्त्वात् तदीयप्रतियोगिमत्त्वविशिष्टतत्सामान्याभावव्यापकैकावच्छेदकावच्छिन्नतदीययावद्विशेषाभाववत्त्वम्, यत्र च द्रव्ये सर्वावयवावच्छेदेन भिन्नभिन्ना जलसंयोगा वर्तन्ते, यावत्तद्विशेषाभावरूपहेतुमति तत्रैकावच्छेदकावच्छिन्नयावत्तद्विशेषाभावरूपोपाध्यभावेन प्रतियोगिमत्त्वविशिष्टतत्सामान्याभाववद्भेदस्य सिद्धौ बाधकाभावात्, प्रतियोगिमति तत्र विशेष्यवद्भेदपर्यवसानेन व्यभिचारसिध्या सामान्यव्याप्तिभङ्गात् . संयोगत्वे गगनादिनिष्ठाभावप्रतियोगितावच्छेदकत्वसाधकानुमानौपयिकदर्शितव्याप्तावपि एकावच्छेदकावच्छेद्यस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावाधिकरणताशून्यगगनादिकं यद्यत्तदन्यत्वस्योपाधित्वं बोध्यम् ।

[दी] एतेनाऽयं संयोगाभाववान् यावद्विशेषाभावादिति परास्तम् ; व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपाधित्वाच्च । नच प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वम् , गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात् ।

---

**एतेने** ति । अनवच्छिन्नयावत्संयोगविशेषाभाववत्त्वस्योपाधित्वेनेत्यर्थः । **इति** – विशेषप्राप्त्युपष्टम्भमनुमानं परास्तम् ।

दूषणान्तरमप्याह— **व्यर्थे** ति । त्वन्मते संयोगसामान्याभावस्य केवलान्वयितया अभाववत्त्वस्यैव तद्व्याप्यतावच्छेदकत्वेन इतरांशस्य व्यर्थत्वादित्यर्थः । नन्वभावादित्येव हेतुरस्तु इत्यत आह— **अप्रयोजकत्वा** दिति । व्याप्तिग्राहकतर्कशून्यत्वादित्यर्थः । विशेषव्याप्तावुपाध्यन्तरमपि सुलभमित्याह- **निर्गुणत्वादे** रिति । आदिना निष्परिमाणत्वादेः परिग्रहः ।

यद्यद्धर्माश्रयानवच्छेदकं तत्तद्धर्मावच्छिन्नाभावावच्छेदकमिति व्याप्त्युपष्टम्भ्यं वृक्षत्वादेस्संयोगसामान्याभावावच्छेदकत्वसाधकमनुमानमाशंक्य निराकुरुते – **नचे** ति । **गुणाद्यनवच्छेदके**ति । गुणत्वाश्रयानवच्छेदकेत्यर्थः । **तदभावे** ति । गुणत्वाद्यवच्छिन्नाभावेत्यर्थः । तथाच गुणत्वाद्यवच्छिन्नस्यापि अव्याप्यवृत्तिताप्रसङ्ग इति भावः । घटादौ द्रव्यत्वावच्छेदेन घटत्वाद्यभावप्रसङ्गो घटत्वादेर्व्याप्यवृत्तितया तदवच्छेदकाप्रसिध्द्या तदनवच्छेदकत्वरूपापादकाप्रसिद्धेर्न सम्भवतीति नाभिहितः । गुणत्वाद्याश्रयस्य संयोगादेरवच्छेदकप्रसिध्द्या न गुणत्वाद्यवच्छिन्नाभावावच्छेदकत्वापादकाप्रसिद्धिरिति भावः । ननु "यद्धर्माश्रयानवच्छेदक" मित्यत्र यत्पदेन व्याप्यवृत्त्यवृत्तिधर्मो विवक्षितः, गुणत्वादेश्च

[दी] यथा च घटपूर्ववृत्तित्वस्य प्रतिदण्डं वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेपि दण्डत्वं धूमत्वं वा तत्सामान्यावच्छेदकम्,

---

व्याप्यवृत्तिरूपादिवृत्तितया तदाश्रयानवच्छेदकत्वस्य न तदवच्छिन्नाभावावच्छेदकत्वापादकतेत्याशंक्य वृक्षत्वादौ संयोगत्वाश्रयानवच्छेदकत्वरूपसंयोगत्वावच्छिन्नाभावसाधकहेतोरसिद्धिमाह—**यथाचे** ति । **घटपूर्ववर्तित्वस्ये** ति । दण्डनिष्ठघटकारणताघटकतदव्यवहितपूर्वकालसम्बन्धस्येत्यर्थः । **प्रतिदण्डं भिन्नत्वेपि दण्डत्वं तत्सामान्यावच्छेदक** मित्यन्वयः । **प्रतिदण्डं भिन्नत्वेपी** त्यनेन दण्डत्वं तत्प्रत्येकातिप्रसक्तमिति सूचितम् । एवमग्रेपि ।

**तत्सामान्ये** ति । घटपूर्ववर्तितात्वावच्छिन्नेत्यर्थः . प्रत्येकातिप्रसक्तत्वेपि अवच्छेद्यतावच्छेदकानुगतरूपावच्छिन्नानतिप्रसक्ततया तस्यावच्छेदकत्वम्; अन्यथा घटकारणतावच्छेदकत्वमेव भज्येतेति भावः । ननु दण्डत्वस्य घटनियतपूर्ववर्तितावच्छेदकत्वम्, न घटनियतपूर्ववर्तितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वम्; अपि तु तदव्यवहितपूर्वकालनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपं पारिभाषिकमेव, तच्चातिप्रसक्तेपि निराबाधमेव, स्वरूपसम्बन्धरूपावच्छेदकताया एवावच्छेद्यानतिप्रसक्तत्वनियतत्वादिति प्रत्येकातिप्रसक्तस्य सामान्यानतिप्रसक्तत्वेन सामान्यरूपावच्छिन्नावच्छेदकत्वे दृष्टांतान्तरमाह—**वह्निसामानाधिकरण्यस्ये** ति । **प्रतिधूमं भिन्नत्वेपि धूमत्वं तत्सामान्यावच्छेदक** मित्यन्वयः । तत्पदेनात्र वह्निसामानाधिकरण्यपरामर्शः, धूमत्वस्य तदनवच्छेदकत्वे तस्य वह्निव्याप्यतावच्छेदकत्वं नोपपद्येत । नच व्याप्यतावच्छेदकत्वमपि स्वविशिष्टव्यापकसाध्यकत्वरूपं पारिभाषिकमेव, तच्चातिप्रसक्तसाधारणमिति

[दी] तथा संयोगसामान्यस्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चेति सम्प्रदायविदः । नवीनाः पुन रुत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रळयावच्छेदेन गगनादौ संयोगस्य सामान्याभावो वर्तते,

---

न दृष्टान्तसङ्गतिरिति वाच्यम्; साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वं व्याप्तिः, तत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषः; अत एव यत्र व्यर्थ विशेषणघटितनीलधूमत्वादिना हेतुता तत्र व्याप्यत्वासिद्धिरिति प्राचीन मतानुसारेणैतदभिधानात्; अन्यथापुन स्स्वरूपसम्बन्धरूपकारणत्वप्रति योगित्वादिनिरूपितमनुगतधर्मनिष्ठं स्वरूपसम्बन्धरूपमवच्छेदकत्वं दृष्टान्त तया बोध्यम् । **संयोगसामान्यस्य**—संयोगत्वरूपावच्छेद्यतावच्छेदक रूपावच्छिन्नस्य । **सुवचत्वाच्चे** ति । प्रत्येकसंयोगादिव्यक्त्यतिप्रसक्तस्यापि द्रव्यत्वादेस्तद्रूपावच्छिन्नानतिप्रसक्तत्वादिति भावः । यद्यप्येवमपि प्रमेयत्वादेस्संयोगसामान्यातिप्रसक्तत्वेन तत्सामान्यावच्छेदकत्वाप्रसक्त्या उक्त व्याप्तिबलात्तदवच्छेदेन संयोगसामान्याभावसिद्धिर्न शक्यते वारयितुम्, तथापि प्रतियोगिमत्सम्बद्धदेशकालयोरेव प्रतियोग्यनवच्छेदकयोरभावावच्छेदकत्वनियमः, तयोरेव तदनुभवात्; न तु प्रतियोग्यनवच्छेदकमात्रस्य, मानाभावादित्यत्र तात्पर्यम् । द्रव्ये संयोगसामान्याभावस्य कालभेदाद्यवच्छेदेन स्वयमनुपदं व्यवस्थापनीयतया **सम्प्रदायविद** इत्यनेनाऽस्वरसो दर्शितः । **गुणस्य सामान्याभावो वर्तत** इत्यन्वयः । ध्वंसप्राग भावयोरत्यन्ताभावविरोधिताया निराकृतत्वादिति भावः । एतेन तदवच्छेदेन संयोगादिसामान्याभावोपि सुतरां वर्तते, व्यापकधर्मावच्छिन्नाभाववति व्याप्यधर्मावच्छिन्नाभावसत्त्वानियमादिति सूचितम् । नचोत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रागभाव एव, न तु सामान्यात्यन्ताभावोपि,

[दी] तथा धूमवत्यपि विरहो दहनस्य ; इह पर्वते नितम्बे हुताशनो न शिखर इति प्रतीतेः, संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वात्, वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वात्;

---

मानाभावादिति वाच्यम्; तदा तत्र जन्यैकत्वहेतुभूतस्य एकत्वत्वावच्छिन्नाभावस्यावश्यकतया तस्यैव स्वसमनियतगुणत्वाद्यवच्छिन्नाभावरूपतया विवादाऽयोगात् ।

संयोगादिसाध्यकनित्यद्रव्यमात्रवृत्तिहेतुकस्थले व्यावृत्तिदानायाह– **प्रळये** ति । महाप्रळयस्य जन्यभावानधिकरणतया तदानीं संयोगाद्यसत्त्वादिति भावः । तदानीं च गगनादौ नित्यैकत्वपरिमाणादिसत्त्वेन गुणसामान्याभावासत्त्वात् **संयोगस्ये**त्युक्तम् । अत्र च प्रमाणं "महाप्रळये गगने न संयोग" इत्यादिप्रमाणिकव्यवहार एव । तादृशव्यवहारस्य ध्वंसावगाहित्वेतिप्रसङ्गाद्व्यवहारानादरेचातीन्द्रियगगनादौ गोत्वाद्यभावस्य अप्रामाणिकतापत्तेः प्रत्यक्षासम्भवात्, अनुमानस्यचाऽप्रयोजकत्वात् ।

वह्निमान् धूमादित्यत्र व्यावृत्तिदानायाह– **तथे** ति । **दहनस्य**– दहनत्वावच्छिन्नस्य । **प्रतीते**रित्यन्तं **द्रव्यस्याव्याप्यवृत्तित्वा** दित्यत्र हेतुः । प्रत्यक्षप्रमाणमुक्त्वा युक्तिमप्याह– **वृत्ते** रिति । संयोगरूपसम्बन्धस्येत्यर्थः । **वृत्तिमतो व्याप्यवृत्तित्वस्य**– संयुक्तस्य तत्सम्बन्धेन व्याप्यवृत्तितायाः । **असम्भावितत्वा** दिति । अयमाशयः ; सम्बन्धिसत्तायाः सम्बन्धाधीनत्वाद्यदवच्छेदेन सम्बन्धो नास्ति तदवच्छेदेन तत्सम्बन्धावच्छिन्नतदभावसत्त्वमावश्यकम्, संयोगादेस्सम्बन्धस्य समवायस्य व्याप्यवृत्तित्वेपि न संयोगादेर्व्याप्यवृत्तिता; गुणादौ समवायसत्त्वेपि संयोगाद्यसत्त्ववत्संयोगाद्यनवच्छेदकावच्छिन्ने संयोगादिमति तत्समवायसत्त्वेपि तदभावोपपत्तेरिति ।

[दी] एवं प्रतियोगिमतोरपि देशकालयोर्देशकालावच्छेदेन तदभावः, तथाच तत्तत्साध्यकाव्याप्तिवारणाय तदुपादानम् ; नोपादेयं च

---

केचित्तु — वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो ऽव्याप्यवृत्तित्ववद्वृत्ते र्व्याप्यवृत्तित्वे वृत्तिमतोपि व्याप्यवृत्तित्वं युक्तितौल्यात् ; संयोगादि प्रतियोगिकत्वविशिष्टसमवायोपि न व्याप्यवृत्तिरित्याहुः ।

वह्निमान् धूमादित्यादौ कालविशेषावच्छेदेन हेतुमति वर्तमानं साध्याभावमादाय घटत्ववान् कालत्वादित्यादौ पटाद्यवच्छेदेन काले वर्तमानं कालिकसम्बन्धावच्छिन्नाभावमादाय च व्यावृत्तिदानायाह— **एव** मिति । प्रतियोगिमतो देशस्य प्रतियोग्यनधिकरणकालावच्छेदेन प्रति योगिमतः कालस्य च प्रतियोग्यनधिकरणदेशावच्छेदेनाभाववत्त्वमित्यर्थः । इदानीमत्र घटो नास्तीत्यादिप्रत्यये देशनिष्ठायाः कालावच्छिन्नाधारतायाः कालनिष्ठाया देशविशेषावच्छिन्नाधिकरणताया वा विषयत्वमित्यत्र विनि गमनाविरहादुभयस्यैव विषयत्वादिति भावः ।

**तत्तत्साध्यके** ति । गुणत्वाद्यवच्छिन्नसाध्यकद्रव्यत्वाद्यव्याप्ति वारणायेत्यर्थः । **तत्**— असमानाधिकरणान्तम् । अव्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्याघटितव्याप्तेरप्रसिद्ध्या तद्घटितैव व्याप्तिः; व्याप्य वृत्तिसाध्यके तु प्रतियोगिवैयधिकरण्यानुपस्थितिदशायामपि हेतुसमानाधि करणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहादनुमित्युत्पत्त्या प्रतियोगि वैयधिकरण्याघटितापि व्याप्तिरस्ति ; प्रतियोगिवैयधिकरण्यघटितव्याप्ति रुभयत्रैव प्रसिद्धाऽनुमितिप्रयोजिकाचेत्याशयेन मूलकृतस्तदुपादानमित्याह-- **नोपादेय** मिति । व्याप्यवृत्तिसाध्यके सार्वत्रिकमुपादानं प्रतिक्षिप्तम् , नत्वनुपादानस्य सार्वत्रिकत्वमुक्तम् ; व्याप्यवृत्तेरपि साध्यस्याव्याप्यवृत्तित्व

ग्रहदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानादेव अनुमित्युपगमात् व्याप्यवृत्तिसाध्यके सर्वत्र तादृशविशेषणोपादानानियमः, तदघटिताया अपि व्याप्तेस्सर्वत्रानुमित्यौपयिकत्वात् । अव्याप्यवृत्तिसाध्यके तु सर्वत्र तदुपादाननियम एव. तदघटितव्याप्तेरप्रसिद्धेरितिबाऽर्थः । व्याप्यवृत्ति साध्यकत्वं च स्वसमानाधिकरणाभावाप्रतियोगिसाध्यकत्वम् । सत्तावान् द्रव्यत्वात्, कालिकसम्बन्धावच्छिन्नाकाशाभावाभाववान् आत्मत्वादित्या दिकं च न तथा, अतस्तत्र साध्यवति कालात्मादौ कालिकदैशिकविशेषण ताभ्यां तदभावसत्त्वात् प्रतियोगिवैयधिकरण्याविशेषितहेतुसमानाधिकरणा भावाप्रतियोगित्वस्य साध्ये असत्त्वेन व्याप्तेः प्रतियोगिवैयधिकरण्य घटितत्वनियमेपि न दोषः ।

केचित्तु— व्याप्यवृत्तिसाध्यकत्वं यथाश्रुतमेव हेतुमत्यभावस्य दैशिकविशेषणतया वृत्तिर्विवक्षणीया; अतो हेतुमति कालादौ कालिक विशेषणतादिना साध्याभावसत्त्वेपि नाव्याप्तिः; भावस्याप्यभावत्वेन दैशिकविशेषणतया वृत्तिः प्रामाणिकी, अतो नाभावसाध्यकव्यभिचारि-ण्यतिव्याप्तिः । यादृशप्रतियोगितानिरूपकाभावत्वविशिष्टस्य दैशिकविशेषण तया हेतुमति वृत्तिः तादृशप्रतियोगितानवच्छेदकत्वविवक्षया कालिक सम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान् इत्यादावव्याप्तेर्निरासः, तत्राकाशाभावस्य आकाशाभावत्त्वेनैव दैशिकविशेषणतया आत्मनि वृत्तिः, नतूक्तसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वेन, आत्मनि तादृशाभावा भावो नास्तीत्यप्रतीतेः । अव्याप्यवृत्तिसाध्यकेपि संयोगाभाववान् नित्य गुणत्वादित्यादौ अनुमित्यौपयिकद्विविधव्याप्तेस्सम्भवा त्सर्वथैवे त्युक्तम् । तावतापि अव्याप्यवृत्तिसाध्यकेपि क्वचित्तदघटितव्याप्तेस्सम्भव इति सूचितमित्याहुः ।

यत्तु– "**व्याप्यवृत्तिसाध्यके**– अव्याप्यवृत्तित्वग्रहाविषयकसाध्यके. सर्वथैवासमानाधिकरणान्तस्यानुपादेयता ; तत्र लाघवेन प्रतियोग्य सामानाधिकरण्याघटितव्याप्तेरेवानुमानाङ्गतास्वीकारा" दिति व्याख्यानम् ; तदसत् ; – तत्रापि शब्दादिना प्रतियोग्यसामानाधिकरण्यघटितव्याप्तेरेव यदा ग्रहः तदा अनुमितेरुत्पादाय तादृशव्याप्तेरनुमानाङ्गत्वस्योपगन्त व्यत्वात् ; अन्यथा यादृशव्यतिरेकिसाध्ये न केवलान्वयित्वभ्रमः, तादृशसाध्यके लाघवेन साध्याभाववदवृत्तित्वमात्रस्यैव व्याप्तित्वोपगम प्रसङ्गात् , केवलान्वयिनो यस्य साध्यस्य न व्यतिरेकित्वभ्रमविषयता तत्साध्यके हेतुसामानाधिकरण्यविशेषणपरित्यागस्यापि प्रसङ्गाच्च ।

यत्तु—**प्रतियोग्यसामानाधिकरण्ये** त्यत्र प्रतियोगिपदं स्वप्रति योगिपरमवश्यं वाच्यम् , अन्यथा प्रतियोगित्वस्य सामान्यरूपेण केव लान्वयितया प्रतियोग्यसमानाधिकरणस्यैव दुर्लभत्वापत्तेः; तथाच स्वप दस्य तत्तदभावपरतया तत्तदभावप्रतियोग्यसामानाधिकरण्यविशिष्टत्वेन हेतुमद्वृत्तीनां तत्तदभावव्यक्तीनां प्रतियोगितावच्छेदकत्वाभावकूटज्ञान मनुमितिकारणं वाच्यम् , तादृशं च ज्ञानं असर्वज्ञस्य दुर्घटम् ; अतः प्रतियोगिपदस्य प्रकृते साध्यार्थकतया साध्याभावनिष्ठसाध्यसामानाधि करण्याभावविशिष्टस्सन् हेतुमद्वृत्तिरभाव एवानुगतरूपेण निवेश्यः; सद्धेतौ सर्वेषामेव हेतुसमानाधिकरणाभावानां सर्वत्र हेत्वधिकरणे साध्य समानाधिकरणतया साध्यसामानाधिकरण्याभावविशिष्टस्य हेतुमद्वृत्तित्वं न प्रसिध्यतीति साध्यभावनिष्ठत्वं साध्यसामानाधिकरण्ये विशेषणम् . सद्धेतौ सर्वत्र साध्याभावभिन्नाभावे तत्प्रसिद्धिसम्भवः; व्यभिचारिणि च व्यभिचारनिरूपकाधिकरण एव साध्याभावे साध्यसामानाधिकरण्याभाव विशिष्टतया हेतुमद्वृत्तित्वमिति साध्याभावस्यापि लक्षणघटकतया नाति व्याप्तिः । संयोगेन प्रमेयसामान्यसाध्यकसद्धेतौ साध्याभावातिरिक्ताभावा प्रसिद्ध्या हेतुमति साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टाभावा-

[दी] सर्वथैव व्याप्यवृत्तिसाध्यके तत्, साध्यादिभेदेन व्याप्तिभेदादिति वदन्ति । प्रतियोग्यसामानाधिकरण्यं च स्वप्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यम् ;

---

प्रसिद्धिरिति साध्यतावच्छेदकावच्छिन्नाभावनिष्ठसाध्यसामानाधिकरण्यस्याभावो निवेशनीयः; एवञ्च व्याप्यवृत्तिसाध्यके साध्यतावच्छेदकावच्छिन्नसाध्याभावनिष्ठसाध्यसामानाधिकरण्याप्रसिद्ध्या ईदृशव्याप्तिर्न प्रसिद्ध्यतीति तत्साध्यके प्रतियोग्यसामानाधिकरण्याघटितैव व्याप्तिरित्युक्तं **नोपादेयं चे त्यादिने** ति, -- तदपि न; साध्यसामानाधिकरण्यविशेषणीभूतसाध्याभावसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वनिवेशे प्रयोजनाभावाद्व्याप्यवृत्तिसाध्यकेपि सम्बन्धान्तरावच्छिन्नसाध्याभाव एव साध्यसामानाधिकरण्यप्रसिद्ध्या तत्राप्युक्तव्याप्तिप्रसिद्धेः ।

परे तु- ननु प्रतियोग्यसामानाधिकरण्यगर्भव्याप्तेरनुमितिप्रयोजकत्वे प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशायां तदसामानाधिकरण्याविषयकादेव हेतुसमानाधिकरणाभावाप्रतियोगित्वज्ञानादनुमितिरुपेयत इत्यनुपपन्नमत आह—**नोपादेयं चे** ति । **व्याप्यवृत्तिसाध्यके**- अनुमितिपूर्वमव्याप्यवृत्तित्वज्ञानाविषयसाध्यके । **सर्वस्यैव प्रतियोगिवैयधिकरण्यं नोपादेयम्**- अनुमितिप्रयोजकव्याप्तिशरीरे न निवेशनीयम् , तत्र तदघटितव्याप्तिज्ञानमेव हेतुः, **सर्वथैवे** त्यनेन यत्साध्यके कदाचिदनुमितिपूर्वं साध्ये हेतुमत्यव्याप्यवृत्तित्वज्ञानं तत्र तदनुमितिनिर्वाहाय प्रतियोग्यसामानाधिकरण्यमुपादायापि व्याप्तेरनुमितिप्रयोजकत्वमुपेयम् , वक्ष्यमाणरीत्या व्याप्तेरनुगमान्न व्यभिचार इति सूचितम् . **साध्यभेदे** त्युपलक्षणम् ; प्रतियोग्यसामानाधिकरण्यानुपस्थितिदशाभेदेन एकसाध्यकेप्यनुमितिप्रयोजकव्याप्तिभेदोपगमोपि बोद्धव्य इति व्याचक्रुः ।

व्याप्यवृत्तिसाध्यकस्थले द्विविधा व्याप्तिर्नत्वव्याप्यवृत्तिसाध्यक इति साध्यभेदेन व्याप्तिभेदाभावो न सम्भवतीत्यत आह— **साध्यादिभेदेने** ति ।

साध्यतावच्छेदकादिवैशिष्ट्य व्याप्तिघटकतया तद्भेदे तद्भेदस्यावश्यकत्वादित्यर्थः । यद्यपि जात्यादौ गुणकर्मान्यत्वादिसामानाधिकरण्योपलक्षितस्य सत्त्वादेर्व्याप्तिरस्त्येव, गुणादौ तदुपलक्षितसत्त्वाद्यनुमितेः प्रमात्वात्; तथापि गुणादौ गुणान्यत्वादिसामानाधिकरण्यविशिष्टसत्त्वादिप्रतियोगिकवैशिष्ट्यावगाहिन्या अनुमितेर्भ्रमत्वात् तत्र तादृशानुमित्यौपयिकव्याप्तिस्वीकारे सल्लिङ्गपरामर्शादपि भ्रमस्स्यादिति तादृशानुमित्यौपयिकव्याप्तिर्गुणादिवृत्तिहेतोः न स्वीकर्तुं शक्यते; अतस्साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तिशरीरे प्रतियोगितावच्छेदकविशिष्टवैयधिकरण्यपर्यन्तं निवेश्य तत्र तादृशातिव्याप्तिं वारयति— **प्रतियोग्यसामानाधिकरण्यं चे** ति । नच तत्रापि व्याप्तिस्वीकारे क्षतिविरहः, गुणो गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ तादृशव्याप्तिसत्त्वेऽपि बाधेनैव हेतोर्दुष्टत्वोपपत्तेः, द्रव्यपक्षकतादृशसाध्यकजात्यादिहेतोश्च समीचीनताया एवोपगमे क्षतिविरहात् , बाधानवतारदशायां च गुणादौ जात्यादिलिङ्गकविशिष्टसत्तावैशिष्ट्यानुमितिर्भ्रमरूपा प्रमात्मकसल्लिङ्गपरामर्शादपि स्वीक्रियते; अत एव गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ बाधानवतारदशायां प्रमात्मकपरामर्शाद्विशिष्टानुयोगिकवैशिष्ट्यावगाहिनी भ्रमानुमितिर्मणिकारेणोपगम्यत इति वाच्यम् , भ्रमानुमितिजनकपरामर्शस्य भ्रमत्वसम्भवे तदुपपादनमावश्यकमित्याशयात् । गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ परामर्शस्य कथञ्चिदपि भ्रमत्वासम्भवेन अगत्या तत्र प्रमात्मकपरामर्शाद्भ्रमानुमितिस्वीकारात् . गुणो विशिष्टसत्तावान् जातिमत्त्वादित्यादिर्विशिष्टप्रतियोगिकवैशिष्ट्यविषयकानुमितिस्थलमुपेक्ष्य गन्धप्रागभाववान् घटो गन्धवानित्यादिविशिष्टानुयोगिकवैशिष्ट्यविषयकानुमितिस्थलमसिद्धिव्यभिचारासङ्कीर्णबाधोदाहरणत्वेनाभिहितवतो मणिकृतोऽप्युक्तस्थले व्याप्तिर्नास्तीत्याशय उन्नीयते ।

[दी] तेन "अयं गुणकर्मान्यत्वे सति सत्तावान्.जातेः" "भूतत्व मूर्तत्वोभयवान्मूर्तत्वा" दित्यादौ

---

अथ विशिष्टनिरूपित एव समवायादिर्विशेष्याविरोधिनो विशिष्टा भावस्य प्रतियोगितावच्छेदकसम्बन्धः, शुद्धसमवायादेस्तथात्वे दण्डा-द्युपलक्षितपुरुषादिमत्त्वाविरोधि तादृशपुरुषाद्यभावात्तदविरोधितद्विशिष्टपुरुषा द्यभाववैलक्षण्यानिर्वाहात्. नच तदुपलक्षितपुरुषाद्यभावस्य स धर्मो न प्रतियोगितावच्छेदकः, अपि तु प्रतियोगितासमानाधिकरण एव; प्रति योगितावच्छेदकस्यैव प्रतियोगिविशेषणत्वादतादृशस्यैव चोपलक्षणत्वादिति तादृशाभावयोर्विशेष इति वाच्यम्; उपलक्षणेन दण्डादिना व्यावृत्त प्रतियोगिनिष्ठप्रतियोगितायां पुरुषत्वादेरतिप्रसक्ततया तन्मात्रे तदवच्छे दकतायाः पर्याप्त्यसम्भवेन दण्डादेरपि तदवच्छेदककोटाववश्यमन्तर्भा वात्; अत एव पुरुषादिमात्रेण न दण्डाद्युपलक्षितपुरुषाद्यभावस्य विरोधः, तदवच्छिन्नाभावमात्रस्यैव तद्विशिष्टाभावत्वे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ ग्रन्थकृता कूटघटितलक्षणातिव्याप्तिदानमपि विरुध्यते, पृथिवीसमवेतत्वविशिष्टाभावस्य वाय्वादौ सत्त्वेन वायुत्वादेस्तत्र साध्ये सद्धेतुत्वात; तथाच प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्या विवक्षायामपि नातिव्याप्तिः, प्रतियोगितावच्छेदकसम्बन्धेन गुणादेर्विशिष्ट सत्तानधिकरणत्वादिति चेन्न;— विशिष्टनिरूपितसम्बन्धस्य विशिष्टाभाव प्रतियोगितावच्छेदकत्वं सर्वत्र न सम्भवतीति प्रागुक्तत्वात्, अगत्या विशिष्टाभावप्रतियोगिताविशेषणान्तर्भावेन पर्याप्ता, उपलक्षिताभावप्रति योगिता तु दण्डादिरूपावच्छेदकोपलक्षितविशेष्य एव पर्याप्तेत्युपगम्य तयोर्विशेषस्योपपादनीयत्वात्। विशिष्टस्यातिरिक्ततामते विशिष्टसत्ताभाव स्सहजत एव प्रतियोग्यसमानाधिकरण इत्युभयसाध्यकानुसरणम्।

[दी] नातिप्रसङ्गः । नन्वोभयत्वमेकविशिष्टापरत्वम् , विशिष्टं च केवलादन्यदिति तदभावो मनसि सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम् , उभयत्वं हि न विशिष्टत्वादनतिरिक्तम् । न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात् ।

---

नातिप्रसङ्ग इति । हेतुमति विशिष्टाभावादेश्शुद्धप्रतियोगि सामानाधिकरण्येपि विशिष्टप्रतियोगिसामानाधिकरण्यविरहेण न भ्रमानुमिति जनकपरामर्शस्य प्रमात्वप्रसङ्ग इत्यर्थः । व्याप्यवृत्तिसाध्यकेपि प्रतियोगि वैयधिकरण्यावगाहिपरामर्शस्यानुमितिहेतुतया उक्तसाध्यस्य व्याप्यवृत्तित्वेपि नातिप्रसङ्गाप्रसक्तिः ।

ननु मूर्तत्वादिहेतौ भूतत्वादिविशिष्टमूर्तत्वत्वादिरूपतदुभयत्वा वच्छिन्नस्यैव न व्याप्तिः, न तु तदुभयवृत्तिबुद्धिविशेषविषयत्वरूपतदु भयत्वावच्छिन्नस्य ; तथाच विशिष्टातिरिक्ततामते विशिष्टसत्तादिसाध्यक जात्यादिहेताविव उक्तोभयसाध्यकमूर्तत्वादिहेतावपि यथाश्रुतप्रतियोग्य सामानाधिकरण्यनिवेशपक्षे नातिव्याप्तिप्रसक्तिरित्यभिमानं नन्वे त्यादिना निराकरोति—नन्वे ति । सहजत एव — प्रतियोगिव्यधिकरणपदस्य तत्त्वावच्छेदकविशिष्टपरतां विनैव । उभयत्वम्— उभयव्यवहारविषयता वच्छेदकम् । न विशिष्टत्वात्- एकविशिष्टापरत्वात् । अनतिरिक्तम्- अभिन्नम् । "अतिरिक्त" मित्यनुक्त्वा नाऽनतिरिक्तमित्यभिधानं उभयपदार्थतावच्छेदकत्वावच्छेदेनातिरिक्तत्वलाभाय, नञ्पदस्य अनुयो- गितावच्छेदकावच्छेदेनाऽभावबोधकत्वव्युत्पत्तेः । तावता एकविशिष्टापरत्व मुभयनिष्ठव्यासज्यवृत्तिधर्मश्च उभयपदार्थतावच्छेदकमस्तु; न तन्मात्रम् , वक्ष्यमाणानुपपत्तेः. प्रकृते च उभयत्वमेकविशिष्टापरत्वमेवेति शङ्काव्यु-

[दी] वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य प्रत्यक्षसिद्धत्वात् ।

---

दासः । अत्र हेतुः ; **वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वा** दिति । घटत्वपटत्वयोस्सामानाधिकरण्यविरहेऽपि तत्रोभयव्यवहारविषयतावच्छेदकस्य प्रत्यक्षसिद्धत्वादित्यर्थः । अन्यथा तत्रोभयव्यवहारानुपपत्तेरिति भावः । यद्यपि घटत्वपटत्वोभयमिति प्रतीतौ कालिकसम्बन्धघटितसामानाधिकरण्यरूपवैशिष्ट्यस्य विषयता सम्भवति, तथापि वाच्यत्वघटत्वोभयं समवेतमित्यादिप्रतीतिव्यवहारविरहेण उभयं समवेतमिति प्रतीतिव्यवहारयोस्समवायिसमवेतत्वरूपवैशिष्ट्यविषयताया अभ्युपगन्तव्यतया घटत्वपटत्वोभयं समवेतमित्यादौ तादृशवैशिष्ट्याप्रसिध्या व्यासज्यवृत्तिधर्म एव विषय इति भावः; तथाच तदनुरोधेन व्यासज्यवृत्तिधर्मविशेषस्य उभयव्यवहारविषयताया आवश्यकत्वे एकविशिष्टापरत्वस्य तद्व्यवहारविषयत्वमप्रामाणिकमिति न भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ एकविशिष्टापरत्वस्य साध्यतावच्छेदकत्वप्रसक्तिः; तथासत्यनुमितेरुभयवानित्याकारकतानुपपत्तेरिति निर्व्यूढम् ।

ननु मूर्तत्वाधिकरणे मनसि भूतत्वमूर्तत्वोभयं नास्तीति बुद्धेरेकविशिष्टापराभावावलम्बनेनैव उपपत्तिः; मनसि प्रतियोगिसत्त्वेनोभयवृत्तिधर्मावच्छिन्नाभावासत्त्वादिति क्वचिदेकविशिष्टापरत्वस्याप्युभयव्यवहारविषयतावच्छेदकत्वमावश्यकमित्यत आह—नन्वे ति । **तदवच्छिन्नाभावः**— प्रत्येकाधिकरणवृत्तिरुभयव्यवहारविषयतावच्छेदकावच्छिन्नाभावः । **तदवच्छिन्नाभा-वात्**— एकविशिष्टापरत्वावच्छिन्नाभावात् । 'अनतिरिक्त' इति विपरिणतेन सम्बन्धः. प्रतियोगितावच्छेदकविशिष्टेनैव प्रतियोगिनाऽभावस्य विरोधादेकस्याधिकरणेऽपि व्यासज्यवृत्तिधर्मावच्छिन्नाभावसत्त्वे

तथा कल्पयसि, तत एव जन्यत्वमपि कल्प्येत, जन्यस्य कारणसापेक्षत्वस्य लोके दर्शनात्; अजन्येपि तादपेक्ष्ये ब्रह्मणोपि किञ्चिदधीनत्वप्रसङ्गः; ननु 'उपाधिना क्रियते भेदरूप' इति श्रुत्यैव उपाधिसापेक्षत्वमुपपाद्यत इति चेत्? न, स्वाभाविको जीवब्रह्मभेदः किन्तु बिम्बत्वप्रतिबिम्बत्वोपाधिवशादित्येव मर्थपरत्वोपपत्तेः; तर्हि दृष्टान्तवैधर्म्यं स्यात्, तत्र हि सूर्यकादेर्जलाद्युपाधि निबन्धनत्वं प्रतिपाद्यत इति चेन्न,— जलाद्यनुपादाने दृष्टान्ते बिम्बप्रतिबिम्ब भावो न प्रतीयेतेति तदर्थं तदुपन्यासात्; पक्षान्तरेपि दृष्टान्तवैधर्म्यं समान मेव; 'अपो ह्रु गच्छन्नि' ति हि सूर्यस्याद्यधिकरणत्वं प्रतीयते; नच सूर्यस्याद्यधि-करणत्वमस्ति, किन्तु तथा भ्रान्तिरेव; नहि दार्ष्टान्तिके चास्ति, अज्ञानाद्यभिन्न तयैव प्रतीतेः; क्षेत्रेष्वित्यत्रापि प्रतिबिम्बरूप आत्मा शरीरेषु वर्तत इत्यर्थः; यद्वा यथा सूर्यो जलनिष्ठतया प्रतीयमानस्तद्गतक्रियादिभेदाश्रयतया प्रतीयते, तत्त्वतो न तदाश्रयः, एवमात्माप्यन्तःकरणाभिन्नतया प्रतीयमानस्तद्गतज्ञातृत्वा द्याश्रयतया प्रतीयते, न तु तत्त्वतो ज्ञातृत्वादिकमस्तीत्यर्थः; न चात्रान्तःक-रणस्य प्रतिबिम्बोपाधित्वं प्रतीयते, न हीदमभिन्नतया प्रतीते रजतेपीदन्त्वं भासत इत्युक्ते शुक्तेः प्रतिबिम्बोपाधित्वम्; "एकधे" त्यत्रापि बिम्बप्रति बिम्बत्वमात्रं दृष्टान्तः, जलसङ्कीर्तनस्य प्रयोजनं पूर्ववदेव यथा; चन्द्रो जल गततया प्रतीयमानो जलगतैर्भेदैर्युज्यते तथात्मान्तःकरणाभिन्नतया प्रतीयमान स्तद्गतभेदैर्युज्यत इत्यर्थः; "रूपं रूपमि" त्यत्रापि प्रतिशरीरं बिम्बात्मनो वृत्तिरेव प्रतिपाद्यते, न तु तत्र प्रतिबिम्बोपाधिः; यद्वा प्रतिरूपवदुपाधिगतैर्भेदै र्युज्यत इत्यर्थः; ननु जीवब्रह्मणोरभेदस्तावत्प्रतिपाद्यते, तयोस्सावयवत्वं निरवयत्वं च तत्सर्वं बिम्बप्रतिबिम्बभावे अविद्यादेरुपाधितया तस्य प्रतिबिम्बपक्षपातित्वे च सत्येवोपपद्यत इति चेन्न,—तथापि व्यवस्थाभावस्योपपादितत्वात्; नच द्विगुणीकृत्य तत्र वृत्त्यर्थं तत्कल्पना, आकाशादेस्तथा वृत्त्यभावस्य वक्ष्यमाणत्वात्; किञ्चाचाक्षुष-त्वान्न प्रतिबिम्बसम्भवः, न चाकाशवदुपपत्तिः, आकाशस्य प्रतिबिंबासिद्धेः, अभ्र नक्षत्रादेरेव हि प्रतिबिम्बनम्, आकाशप्रतिबिंबव्यवहारस्तु तत्रैवाकाशत्वभ्रमा दुपपन्नः, अत एव ह्याकाशस्योपरिदेशस्थत्वव्यवहारो लौकिकानाम्; अथवा आकाशस्यैव प्रतिबिम्बनम्; नचाकाशस्याचाक्षुषत्वम्, अरूपित्वादिति वाच्यम्,— नीलं नभ इति प्रतीते रूपसद्भावात्; नच समीपेपि तथानुभवप्रसङ्गः, आलो-

खानयामास यः कोपात पृथिवीं सागरांकिताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः ॥३५॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥३६॥
राजानं च पृथुं वैन्यं मृतं शुश्रुम सृंजय ।
यमभ्यषिञ्चन् संभूय महारण्ये महर्षयः ॥३७॥
प्रथयिष्यति वै लोकान् पृथुरित्येव शब्दितः ।
क्षताद्यो वै त्रायतीति स तस्मात् क्षत्रियः स्मृतः ॥३८॥
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥३९॥
अकृष्टपच्या पृथिवी पुटकेपुटके मधु ।
सर्वा द्रोणदुघा गावो वैन्यस्यासन् प्रशासतः ॥१४०॥
अरोगाः सर्वसिद्धार्था मनुष्या अकुतोभयाः ।
यथाभिकाममवसन् क्षेत्रेषु च गृहेषु च ॥४१॥
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
शैलाश्चापाद्यदीर्यन्त ध्वजभङ्गश्च नाभवत् ॥४२॥
हैरण्यांस्त्रिनरोत्सेधान् पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥४३॥
स चेन्ममार संजय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥४४॥
किंवा तूष्णीं ध्यायसे सृंजय त्वं न मे राजन् वाचमिमां शृणोषि ।
न चेन्मोघं विप्रलब्धं ममेदं पथ्यं मुमूर्षोरिव सुप्रयुक्तम् ॥४५॥

सृञ्जय उवाच ।

शृणोमि ते नारद वाचमेनां विचित्रार्थां स्रजमिव पुण्यगन्धाम् ।

राजर्षीणां पुण्यकृतां महात्मनां कीर्त्या युक्तानां शोकनिर्नाशनार्थाम् ४६

न ते मोघं विप्रलब्धं महर्षे दृष्ट्वैवाहं नारद त्वां विशोकः ।
शुश्रूषे ते वचनं ब्रह्मवादिन्न ते तृप्याम्यमृतस्येव पानात् ॥४७॥

अमोघदर्शिन् मम चेत्प्रसादं सन्तापदग्धस्य विभो प्रकुर्याः ।
सुतस्य संजीवनमद्य मे स्यात्तव प्रसादात् सुतसङ्गमश्च ॥४८॥

नारद उवाच ।

यस्ते पुत्रो गमितो यं विजातः स्वर्णष्ठीवी यमदात् पर्वतस्ते ।
पुनस्तु ते पुत्रमहं ददामि हिरण्यनाभं वर्षसहस्रिणं च ॥१४९॥

युधिष्ठिर उवाच ।

स कथं काञ्चनष्ठीवी संजयस्य सुतोऽभवत् ।
पर्वतेन किमर्थं वा दत्तस्तेन ममार च ॥१५०॥

यदा वर्षसहस्रायुस्तदा भवति मानवः ।
कथमप्राप्तकौमारः संजयस्य सुतो मृतः ॥५१॥

उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत् ।
कथंवा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥५२॥

श्रीकृष्ण उवाच ।

अत्र ते वर्णयिष्यामि यथावृत्तं जनेश्वर ।
नारदः पर्वतश्चैव द्वावृषी लोकसत्तमौ ॥५३॥

मातुलो भागिनेयश्च देवलोकादिहागतौ ।
विहर्तुकामौ संप्रीत्या मानुषेषु पुरा विभो ॥५४॥

हविःपवित्रभोज्येन देवभोज्येन चैव हि ।
नारदो मातुलस्तत्र भागिनेयश्च पर्वतः ॥५५॥

तावुभौ तपसोपेताववनीतलचारिणौ ।
भुञ्जानौ मानुषान् भोगान् यथावत्पर्यधावताम् ॥५६॥

प्रीतिमन्तौ मुदा युक्तौ समयं चैव चक्रतुः ।
यो भवेद्धृदि संकल्पः शुभो वा यदि वाऽशुभः ॥५७॥
अन्योन्यस्य स आख्येयो मृषाशापोन्यथा भवेत् ।
तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ ॥५८॥
सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः ।
आवां भवति वत्स्यावः कञ्चित्कालं हिताय ते ॥५९॥
यथावत्पृथिवीपाल आवयोः प्रगुणीभव ।
तथेति कृत्वा राजा तौ सत्कृत्योपचचार ह ॥१६०॥
ततः कदाचित्तौ राजा महात्मानौ तपोधनौ ।
अब्रवीत्परमप्रीतः सुतेयं वरवर्णिनी ॥६१॥
एकैव मम कन्यैषा युवां परिचरिष्यति ।
दर्शनीयानवद्याङ्गी शीलवृत्तसमाहिता ॥६२॥
सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा ।
परमं सौम्यमित्युक्तं ताभ्यां राजा शशास ताम् ॥६३॥
कन्ये विप्रावुपचर देववत्पितृवच्च ह ।
सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी ॥६४॥
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ।
तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च ॥६५॥
नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत ।
ववृधे हि ततस्तस्य हृदि कामो महात्मनः ॥६६॥
यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः ।
न च तं भागिनेयाय पर्वताय महात्मने ॥६७॥
शशंस हृच्छयं तीव्रं व्रीडमानः स धर्मवित् ।
तपसा चेङ्गितैश्चैव पर्वतोऽथ बुबोध तम् ॥६८॥

कामार्तं नारदं क्रुद्धः शशापैनं ततो भृशम् ।
कृत्वा समयमव्यग्रो भवान्वै सहितो मया ॥६९॥
यो भवेद्धृदि संकल्पः शुभो वा यदि वाशुभः ।
अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतम् ॥१७०॥
भवता वचनं ब्रह्मंस्तस्मादेष शपाम्यहम् ।
नहि कामं प्रवर्तन्तं भवानाचष्ट मे पुरा ॥७१॥
सुकुमार्यां कुमार्यां ते तस्मादेष शपाम्यहम् ।
ब्रह्मचारी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च सन् ॥७२॥
अकार्षीः समयभ्रंशमावाभ्यां यः कृतो मिथः ।
शप्स्ये तस्मात्सुसंक्रुद्धो भवन्तं तं निबोध मे ॥७३॥
सुकुमारी च ते भार्या भविष्यति न संशयः ।
वानरं चैव ते रूपं विवाहात्प्रभृति प्रभो ॥७४॥
सन्द्रक्ष्यन्ति नराश्चान्ये स्वरूपेण विनाकृतम् ।
स तद्वाक्यं तु विज्ञाय नारदः पर्वतं तथा ॥७५॥
अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः ।
तपसा ब्रह्मचर्येण सत्येन च दमेन च ॥७६॥
युक्तोऽपि नित्यधर्मश्च न वै स्वर्गमवाप्स्यसि ।
तौ तु शप्त्वा भृशं क्रुद्धौ परस्परममर्षणौ ॥७७॥
प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ ।
पर्वतः पृथिवीं कृत्स्नां विचचार महामतिः ॥७८॥
पूज्यमानो यथान्यायं तेजसा स्वेन भारत ।
अथ तामलभत्कन्यां नारदः सृंजयात्मजाम् ॥७९॥
धर्मेण विप्रप्रवरः सुकुमारीमनिन्दिताम् ।
सा तु कन्या यथाशापं नारदं तं ददर्श ह ॥८०॥
पाणिग्रहणमन्त्राणां नियोगादेव नारदम् ।

सुकुमारी च देवर्षिं वानरप्रतिमाननम् ॥८१॥
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ।
उपतस्थे च भर्तारं न चान्यं मनसाप्यगात् ॥८२॥
देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला ।
ततः कदाचिद्भगवान् पर्वतोनुचचार ह ॥८३॥
वनं विरहितं किंचित्तत्रापश्यत्स नारदम् ।
ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा ॥८४॥
भवान् प्रसादं कुरुतात् स्वर्गादेशाय मे प्रभो ।
तमुवाच ततो दृष्ट्वा पर्वतं नारदस्तथा ॥८५॥
कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयम् ।
त्वयाहं प्रथमं शप्तो वानरस्त्वं भविष्यसि ॥८६॥
इत्युक्तेन मया पश्चाच्छप्तस्त्वमपि मत्सरात् ।
अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह ॥८७॥
तव नैतद्धि सदृशं पुत्रस्थाने हि मे भवान् ।

कृष्णः ।

निवर्तयेतां तौ शापावन्योन्येन तदा मुनी ॥८८॥
श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम ।
सुकुमारी प्रदुद्राव परपत्यभिशङ्कया ॥८९॥
तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् ।
अब्रवीत्तव भर्तैष नात्र कार्या विचारणा ॥१९०॥
ऋषिः परमधर्मात्मा नारदो भगवान् प्रभुः ।
तवैवाभेद्यहृदयो मा तेऽभूदत्र संशयः ॥९१॥
सानुनीता बहुविधं पर्वतेन महात्मना ।
शापदोषं च तं भर्तुः श्रुत्वा प्रकृतिमागता ॥९२॥
पर्वतोऽथ ययौ स्वर्गं नारदोभ्यगमद्गृहान् ।

प्रत्यक्षकर्ता सर्वस्य नारदो भगवानृषिः ॥९३॥
एष वक्ष्यति ते पृष्टो यथावृत्तं नरोत्तम ।
सुवर्णष्ठीविनोजन्म मरणंचापि सर्वशः ॥९४॥

इति श्रीमहाभारते शान्तिपर्वणि राजधर्मे
नारदोपाख्यानं नाम
**त्रिंशोऽध्यायः ॥ ३० ॥**

श्रीरस्तु ।
अथ एकत्रिंशोऽध्यायः ।

वैशम्पायन उवाच ।

ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत ।
भगवञ्छ्रोतुमिच्छामि सुवर्णष्ठीविसम्भवम् ॥१॥
एवमुक्तस्तु स मुनिर्धर्मराजेन नारदः ।
आचचक्षे यथावृत्तं सुवर्णष्ठीविनं प्रति ॥२॥

नारद उवाच ।

एवमेतन्महाबाहो यथायं केशवोऽब्रवीत् ।
कार्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥३॥
अहं च पर्वतश्चैव स्वस्रीयो मे महामुनिः ।
वस्तुकामावभिगतौ सृंजयं जयतां वरम् ॥४॥
तत्रावां पूजितौ तेन विधिदृष्टेन कर्मणा ।
सर्वकामैः सुविहितौ निवसावोस्य वेश्मनि ॥५॥
व्यतिक्रान्तासु वर्षासु समये गमनस्य च ।
पर्वतो मामुवाचेदं काले वचनमर्थवत् ॥६॥
आवामस्य नरेन्द्रस्य गृहे परमपूजितौ ।
उषितौ समये ब्रह्मंस्तद्विचिन्तय सांप्रतम् ॥७॥

ततोहमब्रुवं राजन् पर्वतं शुभदर्शनम् ।
सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ॥८॥
वरेणच्छन्द्यतां राजा लभतां यद्यदिच्छति ।
आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ॥९॥
तत आहूय राजानं सृंजयं जयतां वरम् ।
पर्वतोनुमतो वाक्यमुवाच कुरुपुङ्गव ॥१०॥
प्रीतौ स्वो नृप सत्कारैर्भवदार्जवसंभृतैः ।
आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥११॥
देवानामविहिंसायां न भवेन्मानुषाक्षमम् ।
तद्गृहाण महाराज पूजार्हो नो मतो भवान् ॥१२॥

सृञ्जय उवाच ।

प्रीतौ भवन्तौ यदि मे कृतमेतावता मम ।
एष एव परो लाभो निर्वृत्तो मे महाफलः ॥१३॥
तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत ।
वृणीष्व राजन् सङ्कल्पं यस्ते हृदि चिरं स्थितम् ॥१४॥

सृंजय उवाच ।

अभीप्सामि सुतं वीरं वीर्यवन्तं दृढव्रतम् ।
आयुष्मन्तं महाभागं देवराजसमद्युतिम् ॥१५॥

पर्वत उवाच ।

भविष्यत्येष ते कामो न त्वायुष्मान् भविष्यति ।
देवराजाभिभूत्यर्थं संकल्पो ह्येष ते हृदि ॥१६॥
सुवर्णष्ठीवनाच्चैव स्वर्णष्ठीवी भविष्यति ।
रक्ष्यश्च देवराजात्स देवराजसमद्युतिः ॥१७॥
तच्छ्रुत्वा सृंजयो वाक्यं पर्वतस्य महात्मनः ।
प्रसादयामास तदा नैतदेवं भवेदिति ॥१८॥

आयुष्मान् मे भवेत्पुत्रो भवतस्तपसा मुने ।
न च तं पर्वतः किंचिदुवाचेन्द्रव्यपेक्षया ॥१९॥
तमहं नृपतिं दीनमब्रुवं पुनरेव च ।
स्मर्तव्योस्मि महाराज दर्शयिष्यामि ते सुतम् ॥२०॥
अहं ते दयितं पुत्रं प्रेतराजवशङ्गतम् ।
पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ॥२१॥
एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम् ।
सृंजयश्च यथाकामं प्रविवेश स्वमन्दिरम् ॥२२॥
सृंजयस्याथ राजर्षेः कस्मिंश्चित्कालपर्यये ।
जज्ञे पुत्रो महावीर्यस्तेजसा प्रज्वलन्निव ॥२३॥
ववृधे स यथाकालं सरसीव महोत्पलम् ।
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ॥२४॥
तदद्भुततमं लोके पप्रथे कुरुसत्तम ।
बुबुधे तच्च देवेन्द्रो वरदानं महर्षितः ॥२५॥
ततः स्वाभिभवाद्भीतो बृहस्पतिमते स्थितः ।
कुमारस्यान्तरप्रेक्षी बभूव बलवृत्रहा ॥२६॥
चोदयामास तद्वज्रं दिव्यास्त्रं मूर्तिमत्स्थितम् ।
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो ॥२७॥
प्रवृद्धः किल वीर्येण मामेषोभिभविष्यति ।
सृंजयस्य सुतो वज्र यथैनं पर्वतोऽब्रवीत ॥२८॥
एवमुक्तस्तु शक्रेण वज्रः परपुरंजयः ।
कुमारमन्तरप्रेक्षी नित्यमेवान्वपद्यत ॥२९॥
सृंजयोपि सुतं प्राप्य देवराजसमद्युतिम् ।
हृष्टः सान्तःपुरो राजा वननित्यो बभूव ह ॥३०॥

घटितप्रतियोग्यसामानाधिकरण्यघटितव्याप्तेस्सङ्ग्रहसम्भवात् । एवं सति अव्यावर्तकाभावीयसम्बन्धघटितप्रतियोग्यसामानाधिकरण्यघटितव्याप्तिज्ञानादप्यनुमितिस्स्यादिति चेत्, इष्टमेवैतत् । एवं सति प्रतियोग्यसामानाधिकरण्यगर्भाभावीयसम्बन्धविशेषघटितव्याप्तिप्रमातोप्युक्तस्थले अनुमिति प्रसङ्गो दुर्वार इति चेत्? का क्षतिरस्माकम्? । वस्तुतस्तु दीधिति कृता स्वयं निष्कर्षणीयहेतुमति प्रतियोग्यनधिकरणत्वनिवेशकल्पे प्रतियोगिव्यधिकरणत्वघटितव्याप्तावभावीयसम्बन्धविशेषनिवेशस्य निष्प्रयोजनत्वेपि प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य हेतुमद्वृत्तितागर्भयथाश्रुतव्याप्तौ तदीयसम्बन्धविशेषनिवेशनमावश्यकम्; अन्यथा संयोगि द्रव्यत्वादित्यादौ प्रतियोग्यनधिकरणगुणादिवृत्तित्वविशिष्टस्यापि संयोगाद्यभावस्य कालिकसम्बन्धेन हेत्वधिकरणकालवृत्तितया अव्याप्तिप्रसङ्गात् । एकसम्बन्धेनैकाधिकरणवृत्तित्वविशिष्टस्याप्यन्यसम्बन्धेनाधिकरणान्तरवृत्तित्वात्प्रतियोगिसामानाधिकरण्याभावनिवेशकल्पेपि गुणादौ तद्विशिष्टस्य संयोगाद्यभावस्य कालिकसम्बन्धेन कालवृत्तित्वात्तत्कल्पेप्यव्याप्तेरावश्यकत्वात् । नच प्रतियोगिसामानाधिकरण्यविशिष्टस्य तस्य कालवृत्तित्वे प्रतियोगिसामानाधिकरण्याभावविशिष्टस्य न तद्वृत्तित्वसम्भवः, भावाभावविशिष्टस्यैकाधिकरणवृत्तित्वे प्रतियोगिसामानाधिकरण्याभावविशिष्टसंयोगाद्यभावस्य दैशिकविशेषणतयापि द्रव्यवृत्तित्वप्रसङ्गादिति वाच्यम्; विरोधिनोर्भावाभावयोः कालिकसम्बन्धेनैकाधिकरणवृत्तितावद्भावाभावविशिष्टस्यापि कालिकसम्बन्धेन एकत्र वृत्तौ विरोधाभावात् । यद्यप्यभावस्य दैशिकविशेषणतासम्बन्धनिवेशे अभावसाध्यके व्यभिचारिणि भावस्य दैशिकविशेषणतानभ्युपगमेऽतिव्याप्त्या साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिवेशे समवायसम्बन्धावच्छिन्नजात्यभावसाध्यके जातित्वादिहेतावव्याप्तिः जात्यादिरूपहेतुमति तादृशसमवायसम्बन्धेन वृत्तेरप्रसिद्धेः; तथापि

साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धातिरिक्तसम्बन्धेन या साध्याभावस्य वृत्तिः तदन्यहेतुमद्वृत्तेः प्रकृतप्रतियोगितानिरूपितानुयोगितावच्छेदकसम्बन्धेन हेतुमति वृत्तेर्वा अभावविशेषणत्वोपगमान्न दोषः । उक्तस्थले हेतुमति काले कालविशेषवृत्तित्वविशिष्टनित्यस्यात्यन्ताभावप्रसिद्ध्यातिव्याप्तिसङ्गतिः ।

अत्यन्ताभावत्वघटकनित्यत्वांशं परित्यज्य ध्वंससाधारणसंसर्गाभावत्वनिवेशे महाप्रळये गोत्वरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसोपगन्तृमते ध्वंसमादायोक्तस्थलातिव्याप्तिरशक्यते वारयितुमित्याशङ्क्याह— **संसर्गाभावे** ति । दैशिकविशेषणतयापि ध्वंसस्य कालवृत्तित्वमित्याशयेनोक्तशङ्कासङ्गतिः; अन्यथाऽभावस्य तादृशसम्बन्धेन वृत्तित्वानिवेशेऽत्यन्ताभावमिव ध्वंसमप्यादायातिव्याप्तेर्दुर्वारत्वात् । नच प्रतियोग्यधिकरणमहाकाले गोध्वंसस्य दैशिकविशेषणतासत्त्वेपि प्रतियोग्यनधिकरणप्रळये तस्य तादृशसम्बन्धोऽप्रामाणिक इति वाच्यम्; यदुपाधिविशिष्टस्य प्रतियोग्यधिकरणत्वं तदन्योपाधिविशिष्टस्यैव महाकालस्य तदभावाधिकरणतया महाकालस्य दैशिकविशेषणतया ध्वंसवत्त्वे प्रळयात्मकोपाधेरपि तादृशसम्बन्धेन तदाधारताया आवश्यकत्वात्; अन्यथा प्रळये गौर्नास्तीति व्यवहारानुपपत्तेः । अथवा दीधितिकृन्निष्कर्षणीयप्रतियोगिवैयधिकरण्यकल्पाभिप्रायेणेदम्; तत्कल्पे प्रयोजनाभावादभावे वृत्तिविशेषानिवेशात् । नचाभावे वृत्तिविशेषानिवेशे कालिकसम्बन्धेन गवात्यन्ताभावस्यापि प्रळये वृत्तेः संसर्गाभावमात्रपरत्वोक्तिविरोध इति वाच्यम्; प्रतियोगितावच्छेदककालिकसम्बन्धेन तत्प्रतियोगिनो गोध्वंसस्य हेत्वधिकरणेऽभावात् गवात्यन्ताभावस्य प्रतियोगिवैयधिकरण्याभावात् ।

दी] यदा स्पन्दस्तदा द्व्यणुकम्, यदा ऽदृष्टं तदा जन्यं ज्ञानं दुःखं वा, यदा तस्याऽदृष्टं तदा तदीयज्ञानमित्यादावतिव्याप्तिः, द्व्यणुकत्वादेः द्व्यणुकादिनिखिलशून्यखण्डप्रळयादिनिष्ठध्वंसप्रागभावप्रतियोगितानवच्छेदकत्वात् । नहि तयोस्सामान्याभावत्वमते—

---

ध्वंसस्य तत्प्रतियोगिनोऽत्यन्ताभावस्य प्रतियोगितावच्छेदकदैशिकविशेषणतासम्बन्धेन काले असत्त्वात् प्रतियोगिवैयधिकरण्यमक्षतमेव । यदा स्पन्द इति । अत्र च व्यभिचारनिरूपकाधिकरणं खण्डप्रळयः, जन्य द्रव्यानधिकरणे तस्मिन् द्व्यणुकासत्त्वात् पुनर्द्व्यणुकोत्पत्त्याद्यनुरोधेन पर माणूनां स्पन्दस्वीकारस्यावश्यकत्वात् । तथाच हेत्वधिकरणे तत्र द्व्यणुक सामान्यध्वंसप्रागभावयोरसत्त्वादतिव्याप्तिरिति भावः । द्व्यणुकनाशानुगुण क्रियाया उत्तरसंयोगनाश्याया अधिकरणे चरमपरमाणुसंयोगनाशरूप महाप्रळयपूर्वतृतीयक्षणे द्व्यणुकसामान्यध्वंससत्त्वादत्राप्यतिव्याप्तिर्न विचार सहेत्यतो यदाऽदृष्ट मिति । ज्ञानत्वमात्रेण साध्यतायां प्रळये ईश्वरीय ज्ञानसत्त्वादयं सद्धेतुरेवेत्यतो जन्य मिति । नित्यसुखाभिव्यक्तिर्मुक्ति रिति मते खण्डप्रळयेपि मुक्तात्मनि जन्यज्ञानसत्त्वात् सद्धेतुत्वं सम्भवती त्यतो दुःख मिति । जन्यमात्रं प्रत्यदृष्टस्य हेतुतया महाप्रळयाव्यवहित प्राक्क्षणेपि तज्जनकीभूतस्याऽदृष्टस्यावश्यकत्वमिति तदा जन्यज्ञानत्वदुःखत्वा-द्यवच्छिन्नध्वंससत्त्वान्नोपदर्शितस्थलयोरतिव्याप्तिस्सम्भवतीत्यतः स्थलान्तर माह - **यदा तस्ये** ति । यदात्मसमवेताऽदृष्टं न प्रळयजनकं स तत्पदेन विवक्षितः । व्यभिचारश्चात्र खण्डप्रळये सुषुप्त्यादौ च बोध्यः । खण्ड प्रळयनिष्ठद्व्यणुकादिध्वंसस्य द्व्यणुकत्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगि ताकत्वासम्भवं व्युत्पादयति **नही** ति । **तयोः**- ध्वंसप्रागभावयोः । **सामान्याभावत्वमतेपि**- सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमतेपि । ध्वंस प्रागभावयोरत्यन्ताभावाविरोधित्वमते न तयोरतथात्वमित्येतत्सूचयितुं मते

[दी] ऽप्येकविशेषप्रागभावविशेषान्तरध्वंसकालेपि समये सामान्यावच्छिन्नध्वंसप्रागभावयोरसम्भव इति चेन्न;— प्रतियोगिमत इव ध्वंसादिमतोपि कालस्यात्यन्ताभाववत्त्वे विरोधाभावात् ।

---

पीति । एकविशेषे ति । एकविशेषप्रागभाववति न सामान्यावच्छिन्नध्वंसस्य, विशेषान्तरध्वंसवति न सामान्यधर्मावच्छिन्नप्रागभावस्य सम्भव इत्यर्थः । अन्यूनातिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया तत्कालीनध्वंसादिप्रतियोगिताशून्यानागतादिपदार्थसाधारणधर्मस्य तादृशप्रतियोगितावच्छेदकत्वासम्भवादिति भावः । यद्यप्येवं महाप्रळयवृत्तयोपि गोध्वंसाः प्रत्येकमेकैकगोव्यक्तिमात्रवृत्तिप्रतियोगिताका इति न कस्यापि ध्वंसस्य प्रतियोगितायास्समनियतं गोत्वम् , तथापि चरमध्वंसस्य यावद्गोप्रतियोगिकत्वोपगमे तत्प्रतियोगितावच्छेदकत्वं गोत्वस्य सम्भवतीत्यभिप्रायेण संसर्गाभावत्वनिवेशे पूर्वोक्तस्थलमुपेक्ष्य द्व्यणुकादिसाध्यके स्पन्दादिहेतुकस्थले ऽतिव्याप्तिरभिहिता । वस्तुतस्तु ध्वंसप्रागभावयोर्व्यधिकरणप्रतियोगिकत्वविरहाच्चरमगोध्वंसस्यापि यावद्गोप्रतियोगिकत्वं न सम्भवतीति ध्येयम् । विरोधिनः प्रतियोगिनोऽधिकरणे काल एव चेदभावो वर्तेत तदा सुतरां ध्वंसप्रागभाववति काले प्रळयादावसौ वर्तेत इति सूचनाय प्रतियोगिमत इवेति दृष्टान्तः । **विरोधाभावात्**— बाधकाभावात् । तथा च हेत्वधिकरणे प्रळयादौ गोत्वाद्यवच्छिन्नाभावसत्त्वान्नोक्तस्थलेऽतिव्याप्तिरिति भावः । नच प्रळये गोत्वाद्यवच्छिन्नाभावोऽप्रामाणिकः प्रत्यक्षायोगादनुमानस्य चाप्रयोजकत्वादिति वाच्यम् ,— प्रळये गौर्नास्तीति शब्दस्यैव प्रमाणत्वात् । नहि तादृशवाक्यस्याप्रामाण्यं कश्चिदुपैति । नच ध्वंसादिरेव नञर्थः नात्यन्ताभाव इति वाच्यम् ; अन्वयिनावच्छेदकसमानाधिकरणप्रतियोगिताकाभावमात्रस्य नञा प्रतिपादने ऽतिप्रसङ्गात् तदवच्छिन्नप्रतियोगिताकाभावबोधकताया एव तस्य व्युत्पन्नतया ऽत्यन्ता

[दी] अन्यथा अत्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात् । इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तथात्वम्, अपरस्य तु स्वरूपावच्छिन्नमिति, देशे कालस्येव काले देशस्यावच्छेदकत्वात्;

---

भावमात्रस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमते ध्वंसादेर्नञा प्रतिपादनासम्भवात् । **अन्यथा**— प्रतियोगिमति तद्ध्वंसप्रागभाववति च काले कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्यात्यन्ताभावस्यावृत्तौ । **अत्यन्ताभावस्य**—तादृशात्यन्ताभावस्य । **कालमात्रावृत्तित्वे** ति । दैशिकविशेषणतयेत्यादिः । ननु ध्वंसप्रागभाववति अत्यन्ताभाववृत्तौ तस्य तदविरोधितावत्प्रतियोगिमति तद्वृत्त्या तस्य प्रतियोग्यविरोधिताप्यापद्येताविशेषादित्यत आह– **इयांस्त्वि**ति । **एकस्य**– प्रतियोगिमतोऽपि कालस्य । **देशभेदावच्छिन्नम्**– प्रतियोग्यनवच्छेदकदेशावच्छिन्नम् । **तथात्वम्**— दैशिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नात्यन्ताभाववत्त्वम् । तथाच प्रतियोग्यभावयोरेकावच्छेदेन एकत्रावर्तमानत्वं विरोधित्वं तावताप्यक्षतमेवेति भावः । **अपरस्य**- ध्वंसादिमतः । **स्वरूपावच्छिन्नम्**- ध्वंसाद्यधिकरणतावच्छेदकरूपावच्छिन्नम्, तथात्वमित्यनुषज्यते । तथाच एकावच्छेदेन एकत्र वर्तमानतया ध्वंसाद्यविरोधित्वमत्यन्ताभावस्येति भावः । ननु काले वृत्तौ देशस्यावच्छेदकत्वे किं मानमत आह **देशे कालस्येवे** ति । यथा देशे दैशिकसम्बन्धावच्छिन्नाभावस्य वृत्तौ कालस्यावच्छेदकत्वमिदानीमत्र गौर्नास्तीत्यादिप्रतीतिबलात्, तथा काले कालिकसम्बन्धावच्छिन्नाभावस्य वृत्तावपि देशविशेषावच्छेदकत्वस्यावश्यकत्वं तथाविधप्रतीतिबलादेव, तादृशप्रतीतेः कालावच्छेदेन देशवृत्तिर्देशावच्छेदेन कालवृत्तिर्वा विषय इत्यत्र विनिगमकाभावात्; अवच्छेदकत्वाधिकरणत्वयोरुभयोरेव सप्तम्यर्थत्वादिति भावः । प्रतियोगिमत्यपि काले गवात्यन्ताभावस्य वृत्तौ तस्यासमानाधिकरणान्तेन

[दी.] तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात् । नच संसर्गाभावविशेषोऽत्यन्ताभावः, संसर्गाभावत्वं च संसर्गारोपजन्य प्रतीतिविषयाभावत्वरूपं जन्यताघटकनियमघटितमिति वाच्यम्, तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात्; एवं नियमान्तर स्यात्र प्रवेशेपि न क्षतिरित्याहुः । वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणम् । अनुपदमेव विवेचयिष्यते संसर्गाभावत्व-

---

वारणात्कथं तमादायोक्तातिव्याप्तिर्वार्यत इत्यत आह—तच्छून्ये चे ति । प्रतियोगिशून्ये प्रळयादावित्यर्थः । तदभावस्य— गवात्यन्ताभावस्य । **प्रति योगिव्यधिकरणत्वात्**— प्रतियोगिसामानाधिकरण्याभाववत्त्वात् । सामानाधिकरण्यस्याव्याप्यवृत्तितामत एव प्रतियोगिसामानाधिकरण्या भावस्याभावविशेषणत्वात्; अन्यथा संयोगी सत्त्वादित्यादावेवातिव्याप्तिः तस्य व्याप्यवृत्तितापक्षे प्रतियोग्यनधिकरणवृत्तित्वस्यैव निवेशनीयतया प्रळयादिवृत्तिगवात्यन्ताभावस्यान्यत्र प्रतियोगिसमानाधिकरणत्वेपि लक्षण घटकत्वाव्याघातादिति भावः । संसर्गाभावत्वतद्घटितात्यन्ताभावत्वयो र्व्याप्तिघटितत्वेनानवस्थामाशङ्कते **नचे** ति । **संसर्गाभावविशेषः**— सदातनसंसर्गाभावः । **संसर्गारोपः**—तादात्म्यातिरिक्तसम्बन्धेन प्रति योग्यारोपः । **तद्वदन्यावृत्तित्वे** ति । स्वाव्यवहितपूर्वक्षणावच्छेदेन तद्वतोऽन्यस्मिन्वर्तते यद्यत्तदन्यत्वेत्यर्थः । तत्र— जन्यत्वे । षष्ठ्यर्थे सप्तमी । **नियमान्तरस्य**— अविशिष्टधीव्यावृत्तविशिष्टधीनियामकत्वरूप सम्बन्धत्वघटकनियमस्य । **अत्र**— संसर्गाभावत्वशरीरे । **न क्षति** रिति । तद्वदन्यावृत्तित्वरूपनियमस्यैव तत्र प्रवेशनीयत्वादिति भावः । स्वमते नियमानन्तर्भावस्यानुपदं वक्ष्यमाणत्वादाहुरित्युक्तम् । **नियमाघटितमि** ति । आरोपस्याभावबुद्धिहेतुताया निर्युक्तिकत्वात् तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्यैव संसर्गाभावत्वा

[दी] निवेशे प्रयोजनविरहोऽव्याप्तिश्च । अथ ज्ञानवान्द्रव्यत्वाद्विशेषगुणवान् मनोऽन्यद्रव्यत्वाज्जातिमान्भावत्वादित्यादौ समवायेन ज्ञानादेस्साध्यतायामतिव्याप्तिः , साध्यशून्यानामपि हेतुमतां विषयत्वविशेषणत्वैकार्थसमवायैस्साध्यवत्त्वादिति चेत् ? मैवम् , प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं सम्बन्धिर्वा तद्वृत्तित्वाभावस्य विवक्षितत्वात् । भवति चैवमन्योन्याभावोपि प्रतियोग्यसमा

---

दिति भावः । प्रयोजनविरह इति । साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य निवेशनीयतयाऽन्योन्याभावत्वादिनिरूपकप्रतियोगितामादाय दोषाप्रसक्तेरिति भावः । प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैय्यधिकरण्यनिवेशकल्पमभिप्रेत्याह अव्याप्तिश्चे ति । तन्मते सम्बन्धान्तरावच्छिन्नसाध्याभावमादाय दोषवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया एव निवेशनीयतया तादात्म्यसम्बन्धेन यत्र साध्यता तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नसंसर्गाभावप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिरप्यापद्यत इत्यर्थः । ननु विषयताया वृत्त्यनियामकत्वे प्रतियोगिवैय्यधिकरण्ये सम्बन्धित्वानिवेशपक्षे पूर्वस्थलीयातिव्याप्त्यसङ्गतिरित्यत आह विशेषे ति । दिगुपाधीनां देशे वृत्त्यवच्छेदकत्वमेव न त्वधिकरणत्वमिति मते मनसो मूर्तत्वेपि न दैशिकविशेषणतया अधिकरणत्वमिति द्रव्यत्वमात्रस्य हेतुत्वे मनोरूपहेत्वधिकरण एव साध्याभावः प्रतियोगिव्यधिकरण इति नातिव्याप्तिसम्भव इत्यतो मनोन्ये ति । ननु दिक्कालौ नेश्वरादतिरिच्येते इति सद्धेतुरेवेत्यतो दूषणान्तरमाह जातिमानिति । साध्यशून्यानामपी ति । साध्यतावच्छेदकसम्बन्धेनेत्यादिः । एवम्— अधिकरणत्वस्थाने सम्बन्धित्वनिवेशे । अन्योन्याभावोपी ति । तथा च न तादात्म्यसम्बन्धेन

[दी] नाधिकरणः । तद्विशिष्टस्य हेत्वधिकरणवृत्तित्वं वाच्यम् , तेन

---

साध्यतायामव्याप्तिरिति भावः । **तद्विशिष्टस्य** — प्रतियोग्यसामानाधिकरण्यावच्छिन्नस्य । तेने ति । कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगाभावरूपसाध्याभावस्य गुणादौ प्रतियोगिसामानाधिकरण्याभाववत्त्वेपि हेत्वाधिकरणीभूतवृक्षादेर्न कपिसंयोगसामानाधिकरण्याभावविशिष्टकपिसंयोगाभाववत्त्वम् , यत्र सामानाधिकरण्यविशिष्टवत्त्वं तत्र तदभावविशिष्टाधिकरणत्वाप्रत्ययादतस्साध्याभावो न लक्षणघटक इति नाव्याप्तिरिति भावः । हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावनिवेशनेनाव्याप्तिवारणस्य सुकरत्वेपि मूलोपात्तहेतुसामानाधिकरण्यांशनिवेशवैयर्थ्यभिया न तथा विवक्षितम् । सार्वभौमेनादृतं प्रतियोग्यसामानाधिकरण्यावच्छेदकीभूतहेत्वधिकरणावच्छिन्नहेतुसामानाधिकरण्यस्य चाभावविशेषणत्वमुपेक्ष्य उपाध्यायमते प्रतियोग्यसमानाधिकरणत्वरूपविशेषणवैशिष्ट्यावच्छेदेन हेतुसामानाधिकरण्यरूपविशेषणवैशिष्ट्यनिवेशन एव लाघवमित्यालोच्य तदनुयायिना दीधितिकारेण प्रतियोग्यसामानाधिकरण्यावच्छिन्नहेतुसामानाधिकरण्यं निवेशितम् । यथाश्रुतमूललभ्योऽयमेवार्थः, प्रतियोग्यसामानाधिकरण्यहेतुसामानाधिकरण्ययोरुद्देश्यतावच्छेदकविधेयभावस्य विवक्षितत्वात् ; उद्देश्यतावच्छेदकविधेययोरवच्छेद्यावच्छेदकभावलाभस्य च व्युत्पत्तिसिद्धत्वात् । प्रतियोग्यसामानाधिकरण्यस्य हेतुसामानाधिकरण्यावच्छेदकत्वे प्रतियोग्यसामानाधिकरण्यरूपहेतुतावच्छेदकावच्छिन्नसंयोगाभावादेस्सत्त्वादिव्याप्यत्वप्रसङ्गः, सत्त्वादिसामानाधिकरण्यावच्छेदकरूपवत्त्वस्य सत्त्वादिव्याप्तित्वादिति सार्वभौमोक्तदूषणमेतन्मते निरवकाशम्; तादृशव्याप्तावनेन पारिभाषिकस्यैवावच्छेदकत्वस्य विवक्षितत्वात् , तादृशस्य च तथाविधहेतुतावच्छेदकव्यावृत्तत्वात् । अन्यथा विषयितासम्बन्धेन घटत्वावच्छिन्नस्य ज्ञानत्वादिव्याप्यताया दुर्वारत्वात् , तादृशसम्बन्धेन

[दी] बोध्यम् । प्रतियोग्यनधिकरणीभूतहेत्वाधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः । ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किंचिदव च्छिन्नस्य वाऽनधिकरणत्वमुक्तम् ? आद्ये ऽव्याप्यवृत्तिसाध्यके व्याप्तिः , एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात् ; द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्या दावतिव्याप्तिः, साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषा-

---

नाधिकरण्यं न निवेश्यमेवेति भावः । एवंच हेत्वधिकरणनिरूपित प्रतियोग्यनधिकरणवृतित्वमेवाभावे विशेषणं देयम् , नतु तदवच्छेदकाव- च्छिन्नत्वम्, अनतिप्रयोजनकत्वात् । वृत्तौ प्रतियोग्यनधिकरणनिरूपितत्व हेत्वधिकरणनिरूपितत्वयोर्निवेशापेक्षया तत्र हेत्वधिकरणनिरूपितत्वस्य हेत्व धिकरणे च प्रतियोग्यनधिकरणत्वस्य निवेशे लाघवमित्यालोच्य तथैव निष्कर्ष यति-- **प्रतियोग्यनधिकरणीभूते** ति । प्रतियोगितावच्छेदकावच्छिन्ना- नधिकरणेत्यर्थः । तेन न दर्शितातिव्याप्तिः । **यस्य कस्यचि**दित्यादि षष्ठ्यन्तानामनधिकरणत्वमित्यनेनान्वयः । **प्रतियोगितावच्छेदकावच्छि न्नस्य यस्य कस्यचिदनधिकरणत्वम्**– स्वप्रतियोगितावच्छेदकावच्छि न्नाधिकरणप्रतियोगिकभेदमात्रम् । **तत्सामान्यस्यानधिकरणत्वम्** — स्वप्रतियोगितावच्छेदकत्वेनानुगतीकृतप्रतियोगितावच्छेदकावच्छिन्नाधिकर - णत्वावच्छिन्नभेदः । **प्रतियोगितावच्छेदक यत्किञ्चि**दिति । प्रति योगितावच्छेदकं तत्तद्व्यक्तित्वेन निवेश्य तदवच्छिन्नाधिकरणत्वावच्छिन्न भेदो वा विवक्षित इत्यर्थः । नव्यमते संयोगसामान्याभावस्य केवला न्वयितया तत्र साध्ये सत्तादिः सद्धेतुरेवेत्यतो **द्रव्यत्वाभाववान्वे** ति । **तत्प्रतियोगी** ति । संयोगरूपसाध्याभावप्रतियोगीत्यर्थः । तत्तत्संयो-

[दी] भाववत्त्वात्; नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनो ऽनधिकरणत्वाच्च ; स्वाभावात्मकस्य विशिष्टस्यापि द्रव्यत्वस्य

---

गत्वावच्छिन्नाभावाभावस्य तत्तत्संयोगादेः संयोगसामान्यानतिरिक्तत्वादिति भावः । द्रव्यत्वरूपाभावस्य एकव्यक्तिकतया व्यक्तिविशेषाभावरूपप्रतियोगिसामानाधिकरण्यं न घटत इत्यतस्तस्य किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमाह— **नित्यत्वादी** ति । आदिना जन्यत्वादिपरिग्रहः ।

ननु विशिष्टाभावो विशिष्टस्यैव द्रव्यत्वस्य प्रतियोगी, नतु शुद्धस्य तस्येति कथं शुद्धद्रव्यत्वस्य प्रतियोगिवैयधिकरण्यानुपपत्तिरित्यत आह— **स्वाभावे** ति । नच सर्वस्यैवाभावस्य पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या नातिव्याप्तिसम्भव इति वाच्यम्;— प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशपक्षे उक्तक्रमेणासम्भवस्य साध्यतावच्छेदकसम्बन्धेन तद्वैयधिकरण्यनिवेशपक्षे स्वरूपसम्बन्धावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकसम्बन्धेन सर्वेषामेवाभावानां प्रतियोगिसमानाधिकरणत्वादव्याप्तेः प्रसक्त्या यत्सम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तत्सम्बन्धावच्छिन्नतदभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व साध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभाव एव विवक्षणीयः, एवंचोक्तस्थले स्वरूपसम्बन्धेन प्रतियोग्यनधिकरणत्वाप्रसिद्धावपि संयोगादिसम्बन्धेन घटाद्यभावीयप्रतियोग्यनधिकरणीभूतहेतुमन्निष्ठघटाद्यभावीयप्रतियोगितासु स्वरूपसम्बन्धावच्छिन्नत्वद्रव्यत्वाभावत्वाद्यवच्छिन्नत्वोभयाभावस्याक्षतत्वादतिव्याप्तिरित्यभिप्रायात्

[दी] द्रव्यत्वानतिरेकात् ; तृतीये कपिसंयोगाभाववानात्मत्वादित्यादाव व्याप्तिः, साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मन स्तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात् ।

---

केचित्तु, स्वप्रतियोगिसामान्यानधिकरणहेत्वधिकरणकत्वेन गगनाभाव एव तादृशप्रतियोगिव्यधिकरणः; नच स्वप्रतियोगिसामान्यान्तर्गतनित्यत्वादिविशिष्टगगनाभावाभावरूपप्रतियोग्यधिकरणहेत्वधिकरणकत्वेन तस्य न तथात्वसम्भव इति वाच्यम्,-- नित्य एव नित्यत्वविशिष्ट गगनाभावाभावो नास्तीति प्रत्ययात् तत्प्रत्ययस्य च नित्यत्वे नित्यत्व विशिष्टगगनाभावाभावाभावत्वकल्पनैनेवोपपत्तेर्गगनाभावे तदकल्पनात्, नित्यत्वविशिष्टगगनाभावाभावस्य गगनाभावाप्रतियोगित्वादित्याहुः । तन्न, तथापि पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावरूपप्रतियोग्यधिकरणहेत्वधिकरणकत्वेन गगनाभावस्य प्रतियोगिव्यधिकरणत्वसम्भवात्, पूर्वक्षणावृत्ताववृत्तावपि पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावो नास्तीति प्रत्ययात् पूर्वक्षणवृत्तित्वविशिष्टगगनाभावाभावत्वस्य पूर्वक्षणवृत्तित्वे कल्पयितुमशक्यत्वेन गगनाभावानतिरिक्तविशिष्टगगनाभाव एव तत्त्वस्य कल्पनीयतया पूर्वक्षण वृत्तित्वविशिष्टगगनाभावाभावे गगनाभावप्रतियोगित्वावश्यकत्वादिति । स्वरूपसम्बन्धेन गगनादेः वृत्तिमत्त्वे तु नैष दोष इति ध्येयम् । आत्मनि संयोगसामान्याभावस्य सर्वमतसिद्धित्वविरहात् कपी ति । जन्यद्रव्यवृत्तिहेतुके हेत्वधिकरणजन्यद्रव्ये गुणसामान्याभावस्याप्युत्पत्तिकालावच्छेदेन स्वमते सत्त्वात्तत्र तादृशप्रतियोगिवैयधिकरण्यं न घटते, अत आत्मत्वहेतुकानुसरणम् । गुणसामान्याभावत्वस्य कपि संयोगस्वरूपाभावप्रतियोगितावच्छेदकत्वं स्फुटीकर्तुं कपिसंयोगानां गुणत्व कीर्तनम् । तत्प्रतियोगितावच्छेदके ति । तथाच तादृशाभावा अपि

[दी] नैवम्– यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत-

---

द्यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणा एव, तत्प्रतियोगितावच्छेदकत्वात् कपिसंयोगाभावत्वस्याव्याप्तिरिति भावः । यादृशे ति यद्यत्प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नभेदवत्त्वमित्यर्थः । कपिसंयोग्येतत्त्वादित्यादौ यत्किंचित्कपिसंयोगादिव्यक्त्यनधिकरणत्वेपि हेतुमतः कपिसंयोगत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणसामान्यभेदवत्त्वासम्भवात् स्वपदेन तादृशप्रतियोगितोपात्तुं न शक्यत इति नाव्याप्तिः । द्रव्यत्वाभाववान् सत्त्वादित्यादौ हेतुमतो द्रव्यादेर्विशिष्टद्रव्यत्वाभावरूपप्रतियोग्यधिकरणत्वेपि द्रव्यत्वाभावत्वावच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नानधिकरणत्वात् तस्य लक्षणघटकतेति नातिव्याप्तिः । कपिसंयोगाभाववानात्मत्वादित्यादौ च कपिसंयोगाभावत्वावच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नाधिकरणमेव हेतुमत्, किन्तु गुणसामान्याभावत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणमेव तदनवच्छेदकमेव साध्यतावच्छेदकामिति नाव्याप्तिरिति भावः । न चैवं घटत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं धूमवत् तादृशप्रतियोगितानवच्छेदकंच वह्नित्वमित्याकारकस्वाभावकूटावगाहिनः समूहालम्बनज्ञानस्यैवानुमितिहेतुतया विशिष्टपरामर्शस्यानुमितिहेतुत्वमनुपपन्नम्, अभावकूटघटिततया व्याप्तेर्दुर्ज्ञेयत्वापत्तिश्चेति वाच्यम्, हेतुमन्निष्ठभेदप्रतियोगितायां स्वावच्छेदकावच्छिन्नवत्त्वसम्बन्धेनावच्छेदिका या प्रतियोगिता तदनवच्छेदकत्वस्य एकसामान्याभावरूपस्य निवेशे तात्पर्यात् । तादृशभेदप्रतियोगितायां स्वावच्छिन्नवत्त्वसम्बन्धेन अनवच्छेदकत्वस्य साध्यतावच्छेदकविशेषणतयैव सामञ्जस्येपि यथासन्निवेशे न वैय्यर्थ्यम् । तथाविधसम्बन्धेन तादृशभेदप्रतियोगित्वानवच्छेदक

[दी] स्तदनवच्छेदकत्वस्योक्तत्वात् । अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशसम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान् तत्र वर्तमानत्वमभावस्य साध्यस्य च यादृशसम्बन्धः प्रविष्टस्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेदकत्वं वाच्यम् , तेन धूमसमवायिनिष्ठात्यन्ताभावस्य संयोगावच्छिन्नप्रतियोगितायाः धूमसंयोगिनिष्ठाभावस्य च समवायावच्छिन्नप्रतियोगिताया अव-

---

साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पुनरन्योन्याभावघटितलक्षणनिष्कृष्टार्थो बोध्यः । सम्बन्धसामान्येन हेतुमत्त्वनिवेशेऽव्याप्तेर्वक्ष्यमाणत्वात् सम्बन्धविशेषेण हेतुमत्त्वम्, प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वानिवेशेनासम्भवस्य वाच्यतया तत्र तच्च निवेशयति— **अत्रचे** ति । **ग्राह्यसामानाधिकरण्ये**— अनुमितिकारणीभूतज्ञानविषयहेतुनिष्ठसाध्यसामानाधिकरण्यशरीरे । **साध्यस्यचे** ति । अत्रापि **ग्राह्यसामानाधिकरण्य** इति **प्रविष्ट** इति चानुषज्यते; तथाच तत्सम्बन्धेन हेतुमति वर्तते योऽभावः तदीयतत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदको यो धर्मः तदवच्छिन्नस्य तेन साध्यतावच्छेदकसम्बन्धेन अधिकरणे तेन हेतुतावच्छेदकसम्बन्धेन वर्तमानत्वं तादृशसाध्यतावच्छेदकसम्बन्धेन साध्यानुमितिप्रयोजकमित्यर्थः । व्यापकताघटकसाध्यीयसम्बन्धेन साध्याधिकरणे तादृशसाधनीयसम्बन्धेन साधनस्यावर्तमानत्वग्रहदशायामनुमितिवारणाय सामानाधिकरण्यशरीरेपि सम्बन्धविशेषनिवेशनम् ।

वस्तुतस्तु विरुद्धत्वेन ज्ञायमानधर्मवत्ताज्ञानस्यानुमितावेव प्रतिबन्धकताया वक्ष्यमाणतया सामानाधिकरण्यशरीरे सम्बन्धविशेषानिवेशेपि न क्षतिः, सामानाधिकरण्यावगाहितायाः प्रयोजकत्वंच विशिष्टपरामर्शनिर्वाहायापेयते, पर्वतीयधूमव्यापको वह्निरिति व्यापकतापरामर्श-

[दी] च्छेदकत्वेपि वह्नित्वस्य न क्षति । यद्वा साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वं हेतुगतो वक्तव्यम्', तथाच सम्बन्धभेदेन प्रतियोगिता न विशेषणीया; एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयम् , न त्वधिकरणत्वम् , तथाच धर्मिणो व्याप्यत्वं व्यापकत्वं च निर्वहति । तथाहि, तादात्म्येन धूमवतः सम्बन्धिनि महानसे वर्तमानो यो ऽन्योन्याभावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य

---

हेतुताया दूषितत्वात् ; नच स्वव्यापकसाध्यकहेतुमानित्याकारकः सामानाधिकरण्यानवगाहिविशिष्टपरामर्श एव हेतुरस्तामितिवाच्यम् , बहुव्रीह्यर्थस्य सामानाधिकरण्यपर्यवसितत्वात् ;' इति ध्येयम् । प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसम्बन्धस्थाने साध्यतावच्छेदकसम्बन्धनिवेशन एव साध्यतावच्छेदकसम्बन्धेन साध्यवद्भेदनधिकरणनिष्ठसम्बन्धान्तरावच्छिन्नसाध्याभावमादाय दूषणस्यापि निराकरणसम्भवे प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशनमफलमित्याशयेनाह— **यद्वे** त्यादि । तादात्म्यसम्बन्धेन व्यापकतानिर्वाहाय प्रतियोग्यनधिकरणत्वमनुक्त्वा प्रतियोग्यसम्बन्धित्वमभिहितम् ।

ननु प्रतियोगिवैयधिकरण्ये सम्बन्धित्वनिवेशेपि तादात्म्यसम्बन्धेन व्याप्तिर्न निर्वहति, तादृशसाध्यतावच्छेदकसम्बन्धेन साध्याधिकरणाप्रसिद्ध्या तद्घटितसाध्यसामानाधिकरण्यस्याप्रसिद्धेरित्यत आह— **एवंस्थिते** इति । प्रतियोगिवैयधिकरण्यशरीरे सम्बन्धित्वनिवेशे सतीत्यर्थः । **सम्बन्धित्वं निवेशनीय** मिति । तथाच साध्यसामानाधिकरण्यं साध्यसम्बन्धिसम्बन्धित्वम् । अभावस्य हेतुसामानाधिकरण्यमपि हेतुसम्बन्धिसम्बन्धित्वं आदिना ग्राह्यम् । **धर्मिणः**— धूमवदादेर्वह्निमदादेश्च । तदेव दर्शयति— **तथाही** ति । **तादात्म्यसम्बन्धावच्छिन्ने** ति पूर्वकल्पाभिप्रायेण । धूमवद्वह्निमतोर्व्याप्तिमुक्त्वा धर्मिणो

[दी] वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धित्वम् ; एवं धर्मिणो धर्मव्यापकत्वव्याप्यत्वे बोध्ये । अत एव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं सङ्गच्छते । यथा च यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टज्ञाने यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्यपक्षयोः विशिष्टानुमितिः, तेन

---

धूमवदादेर्वह्न्यादिरूपधर्मव्याप्यत्वं वह्निमदादिरूपधर्मिणश्च धूमादिरूपधर्मव्यापकत्वं चाह— एवमिति । अतएव- तादात्म्यसम्बन्धेन व्याप्तिव्यवस्थापनादेव, तत्र तत्रोक्तमिति पृथिवीत्वेनेतरभेदसाधनायेत्यादिः । सङ्गच्छत इति । अन्यथा जलादीनां संयोगादिना पृथिव्यादिवृत्तितया तेन सम्बन्धेन व्याप्तेर्जलादिभेदसाधनानुपयोगितया च तदुक्त्यसङ्गतेरिति भावः । पृथिवीत्वाभावस्य स्वरूपसम्बन्धावच्छिन्नाभावेन पृथिवीत्वस्वरूपेण जलादिभेदः सिद्ध्यति, नतु कालिकसम्बन्धावच्छिन्नाभावेनेत्यत्र पृथिवीत्वेन व्याप्यस्य जलादेरन्योन्याभाव एव सिद्ध्यति न त्वत्यन्ताभाव इत्यत्र वा किं नियामकमित्याशङ्कायां व्यतिरेकिणि तत्सम्बन्धघटितव्यापकत्वेन गृह्यमाणस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकादेवाभावाद्धेतोर्येन सम्बन्धेन यस्य व्याप्यता गृहीता तत्सम्बन्धावच्छिन्नप्रतियोगिताक एव तदभावस्सिद्ध्यतीति समाधास्यन् अन्वयिनि व्यापकताघटकसम्बन्धेन व्याप्यवत्ताज्ञानात् व्यापकताघटकसम्बन्धेनैव व्यापकं सिद्ध्यतीति नियमं दृष्टान्तविधया दर्शयति – यथाचेति । तादृशेन — तादृशेनैव । विशिष्टज्ञाने— पक्षधर्मिकविशिष्टज्ञाने । विशिष्टानुमितिः – वैशिष्ट्यविषयकानुमितिः । व्याप्यताघटकसम्बन्धेनैव व्याप्यव्याप्यवत्ताज्ञानं हेतुरिति नियमस्य व्यापकताघटकेनैव सम्बन्धेन च व्यापकस्यानुमितिनियमस्य च क्रमेण प्रयोजनमाह – तेनेति ।

[दी] न संयोगेन धूमावयवे नवा समवायेन पर्वते वह्निधीः, तथैवा वगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावस्सिध्यतीति । कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन संयोगेन वा वह्निविरहिणि स्वावयवे समवायेन धूमो न निवर्तते, निवर्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति [ नियम ] उपपद्यते ? तथाच तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहात् व्यापकनिवृत्त्या तादात्म्येनैव तेषामभावस्सिद्ध्यति, स एव चान्योन्याभावः ।

---

अनवतीर्णबाधस्याभ्रान्तस्येति शेषः । धूमावयवे न वह्निधीरित्यन्वयः । तत्र समवायेन वह्निव्याप्यधूमवत्त्वेपि व्याप्यताघटकेन संयोगेन तद्वत्त्वाभावादिति भावः । नवा समवायेने ति । पर्वतवृत्तिहेतुं प्रति समवायेन वह्नेरव्यापकत्वादिति भावः । प्रकृतोपयुक्तनियमद्वयमाह— तथैवे ति । सम्बन्धेन-- सम्बन्धेनैव । एतन्नियमद्वयस्य प्रयोजनान्तरानुरोधेनाप्यावश्यकत्वमिति दर्शयति— कथमन्यथे ति । अन्यथा-एतादृशनियमानभ्युपगमे । इति कथमुपपद्यत इत्यन्वयः । महानसे संयोगेन धूमो न निवर्तत इत्यन्वयः । महानसधर्मिकासिद्धिविषयसंयोगादिसम्बन्धावच्छिन्ननिवृत्तिप्रतियोगी नेत्यर्थः । निवर्तते चे, ति धूम इत्यनुषज्यते । प्रकृतमाह— तथाचे ति । व्याप्यत्वग्रहात्— स्वरूपसम्बन्धावच्छिन्नपृथिवीत्वाभावनिष्ठव्यापकतानिरूपितव्याप्यताग्रहात् । व्यापकनिवृत्त्या— स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकेनैव पृथिवीत्वाभावाभावेन । तेषाम्— जलादीनाम् । नन्वेतावतापि अत्यन्ताभावसिद्धिः कथं निराकृतेत्यत आह— स एव चे ति । स चान्योन्याभाव एवेति योजना, तादात्म्यसम्बन्धावच्छिन्नाभावश्चान्योन्याभाव एव नात्यन्ताभाव इत्यर्थः । अतो

[दी] इत्थमेव च तादात्म्याद्वृक्षशिंशपयोः व्याप्तिनिश्चय इति सङ्गच्छते ।

अतएव गोत्वत्वाग्रहदशायां यत्र सास्नादिमत्ता गौरिति तादात्म्येन

नेतरात्यन्ताभावसिद्धिरिति भावः । तादात्म्यसम्बन्धेन व्याप्तौ प्राचां सम्मति माह—इत्थमेव चे ति । तादात्म्यसम्बन्धेन व्याप्तिस्वीकारेणैव, इति, ग्रन्थः सङ्गच्छत इत्यन्वयः । ननु तादात्म्यसम्बन्धेन व्याप्त्यनभ्युपगमे का क्षतिः? पृथिव्यां जलादिभेदसिद्धेर्जलादिभेदाभावव्यापकीभूताभावप्रतियोगित्वेन पृथिवीत्वज्ञानादेव सम्भवात्, पृथिव्येकदेशे जलादिभेदप्रसिद्ध्या तादृशव्याप्तिग्रहसम्भवस्य व्यतिरेकिणि वक्ष्यमाणत्वात्, तादात्म्यसम्बन्धेन धर्मिणोऽनुमितेरप्यनुभवसिद्धत्वे धर्मितादात्म्यनिष्ठव्यापकताज्ञानस्यैव तद्धेतुतायाः स्वीकरणीयत्वात्, असति प्रतिबन्धके तत्तादात्म्यादिविधेयकानुमितौ तादात्म्यसम्बन्धेन तस्य विधेयत्वोपगमे क्षतिविरहादित्यत आह—अत एवे ति। **अत एव**—तादात्म्येन व्याप्तिस्वीकारादेव । **गोत्वत्वाग्रहदशायां गौः सिद्ध्यती**त्यन्वयः । अन्यथा तत्र गोत्वत्वरूपसाध्यतावच्छेदकानुपस्थित्या गोत्वसाध्यकानुमित्यौपयिकव्याप्तेर्दुर्ग्रहतया गोत्वसाध्यकानुमितेः, गोतादात्म्यस्यापि गोत्वरूपतया तन्निष्ठव्यापकताया अपि गोत्वत्वोपस्थितिमन्तरेण दुर्ग्रहतया तादात्म्यधर्मिकव्यापकताज्ञानाधीनतादात्म्यसंसर्गकगवानुमितेश्चासम्भवेन अयं गौरित्याकारकानुमितेरनुभवसिद्धाया अपलापप्रसङ्गादिति भावः ।

यद्यपि गोत्वांशे गोत्वत्वं धर्मितावच्छेदकीकृत्य व्यापकतावच्छेदकत्वावगाहिग्रह एव गोत्वेन गोसाध्यकानुमितावपि हेतुर्वाच्यः, निर्धर्मितावच्छेदकव्यापकतावच्छेदकत्वग्रहस्य व्यभिचारज्ञानाप्रतिबध्यतयाऽनुमित्यजनकत्वादिति तादात्म्येन गोत्वावच्छिन्नसाध्यकानुमितिरपि गोत्वत्वानुपस्थितिदशायां न सम्भवति, तथापि वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायेणेदमभिहितम् ।

तन्मते—स्वरूपतस्साध्यतावच्छेदकप्रकारिकायामनुमितौ स्वरूपतः साध्यतावच्छेदकप्रकारकस्य साधनवन्निष्ठाभावप्रतियोगित्वत्वावच्छेदेन साध्यतावच्छेदकरूपावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावावगाहिज्ञानस्य हेतुतया तत्र गोत्वत्वज्ञानानपेक्षणेनानुपपत्त्यभावात्, ईदृशयुक्त्या तादात्म्येन व्यापकतासिद्धिवत् गोत्वत्वाद्यग्रहदशायां यत्र गौस्तत्र सास्नादिरिति व्याप्तिग्रहाधीनगवादिहेतुकसास्नादिसिद्ध्यनुरोधात् तत्सम्बन्धेन व्याप्यतासिद्धिरपि द्रष्टव्या ।

केचित्तु- तादात्म्यसम्बन्धेन व्यापकत्वानुपगमेपि गवान्यावृत्तित्वरूपव्याप्तिज्ञानाद्गोत्वादिविधेयकानुमितिर्निष्प्रत्यूहैव, तथा सति अयं गौरित्याकारकताप्यनुमितेर्निर्वहति, स्वरूपतो गोत्वावगाहिनो गवान्यावृत्तित्वज्ञानात्स्वरूपत एव गोत्वविषयिण्यास्तस्यास्सम्भवात् ; नचाऽनवच्छिन्नविधेयताया अक्लृप्तत्वात्तादात्म्यसम्बन्धेन गोरेव विधेयत्वमुचितम्, अयं गौरित्यादिवाक्यजन्यबोधे तादात्म्यसम्बन्धावच्छिन्नगवादिविधेयतायाः क्लृप्तत्वादिति वाच्यम्,- अयं गौरित्याकारके इदन्त्वावच्छिन्नविशेष्यक गोत्वादिप्रकारकप्रत्यक्षे या गोत्वादिप्रकारता तस्या एव विधेयतात्वोपगमे अनुमितौ तत्कल्पनेऽतिरिक्तविधेयताकल्पनाभावात् ; अस्तु वा गवान्यावृत्तित्वरूपव्याप्तिज्ञानादेव तादात्म्येन गवानुमितिः; किं तादात्म्येन व्यापकतयेत्याशङ्कानिराचिकीर्षयोक्तं गोत्वत्वाद्यग्रहदशाया मिति; गवेतरावृत्तित्वस्य हेतुभूतसास्नादावग्रहदशायामित्यर्थ इत्याहुः । तन्न ; गवेतरावृत्तित्वमात्रस्य गोत्वत्वशब्दार्थताविरहेण उदक्षरताया दुर्वारत्वात् । गोत्वत्वपदं तद्वृत्तिधर्मपरमिति तु न सम्यक्, गोत्वत्वस्य विशिष्टगोवृत्तित्वरूपस्य स्वरूपतो भानासम्भवेन तज्ज्ञानदशायां तद्वृत्तिधर्मभानस्यावश्यकत्वात् ।

अपरे तु- गोत्वत्वाद्यग्रहदशायामपि गौस्सिद्ध्यतीत्यन्वयः । यदा गोत्वत्वमनुमितौ न भासते तदापि तत्र गौर्भासत इत्यर्थः । स्वरूपतो

गोत्वादिप्रकारिका गवाद्यनुमितिर्भवतीति यावत् । तादात्म्येन व्यापकतानुपगमे गोत्वस्यैव सास्नादिलिङ्गकानुमितौ भानस्योपगन्तव्यतया विधेयताया आश्रयावच्छिन्नत्वनियमेन स्वरूपतो गोत्वप्रकारकानुमितेरनुभवसिद्धाया अनुपपत्तिरित्युपष्टम्भसङ्गतिरिति प्राहुः । यत्तु अनवच्छेदकत्वांशे तादात्म्यसम्बन्धेन स्वरूपतस्साध्यतावच्छेदकप्रकारकज्ञानादनवच्छेदकत्वांशे आधेयतासम्बन्धेन स्वरूपतस्तत्प्रकारकज्ञानाद्वा स्वरूपतस्तत्प्रकारकानुमितिरित्युपगमेन गोत्वत्वाग्रहदशायामपि तादात्म्येन व्यापकताज्ञानादनुमितिर्निर्वहतीति नोक्तानुपपत्तिरिति ; तदसत्, अयं गौरित्यादिज्ञानानुव्यवसाये स्वरूपतो गोत्वादिविशेषितप्रकारिताप्रकारेण ज्ञानभानात्समवायातिरिक्तेन निरूपितत्वसम्बन्धेन गोत्वादेस्स्वरूपतः प्रकारताया आवश्यकत्वेपि समवायातिरिक्तेनापरसम्बन्धेन स्वरूपतः प्रकारताया अप्रामाणिकत्वात् ; अन्यथा व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वादेर्विधेयतावच्छेदकत्वानुपपत्त्या केवलान्वयिग्रन्थे तज्ज्ञानस्यानुमिति हेतुताखण्डनं दीधितिकृतो विरुद्ध्येत, उक्तक्रमेणैव तन्निर्वाहात् । नच तथापि प्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायकतयापि न तद्ग्रन्थसङ्गतिरिति वाच्यम् , प्रकारित्वांश इवावच्छेद्यत्वांशेपि निरूपितत्वसम्बन्धेन जातेः स्वरूपतः प्रकारताभिप्रायेणैतद्ग्रन्थसङ्गमनेप्यस्याप्रामाणिकत्वाभिप्रायेणाग्रिमव्यापकताज्ञानहेतुताखण्डनसङ्गतेः ।

परेतु - गोत्वत्वाद्यग्रहदशायामपि स्वरूपतो भासमानगोत्वावच्छिन्ने हेतुमन्निष्ठभेदप्रतियोगितानिरूपिततादात्म्यसम्बन्धावच्छिन्नावच्छेदकत्वाभावरूपान्योन्याभावघटिततादात्म्यसम्बन्धावच्छिन्नव्यापकताज्ञानात् तादात्म्येन स्वरूपतो गोत्वप्रकारकानुमितिस्सम्भवत्येव, एकरूपेणावच्छेदकेपि अवच्छेदकतानवच्छेदकरूपेणावच्छेदकत्वाभावं स्वीकृत्यैवान्योन्याभावघटितलक्षणस्य ग्रन्थकृता यद्रूपावच्छिन्न मित्यादिना परिष्करणीयत्वात् ; एतदभि

[दी] गोर्व्यापकत्वग्रहे सास्नादिना तादात्म्येन गौः, तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकश्च सिद्ध्यति । एवञ्च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वम्, वृत्त्यनियामकसंयोगमात्रस्याभावप्रतियो-

---

प्रायेणैव तत्सङ्गतेः । केवलान्वयिग्रन्थे च प्रतियोगिनि प्रतियोगिता नवच्छेदकरूपेण प्रतियोगित्वाभावस्यैव अवच्छेदकेप्यवच्छेदकतानवच्छेदकरूपेणावच्छेदकत्वाभावस्याप्रामाणिकतया व्यापकताज्ञाने साध्यतावच्छेदकस्य स्वरूपतो भानं न सम्भवतीत्यभिप्रायेण व्यापकताज्ञानहेतुता मते स्वरूपतो ज्ञानत्वादिप्रकारकानुमितेरनुपपत्तेर्वक्ष्यमाणतया पूर्वापरग्रन्था विरोध इति प्राहुः । **तादात्म्येन गोर्व्यतिरेकाच्चे** ति । तादात्म्य सम्बन्धावच्छिन्नप्रतियोगिताकातादात्म्यसम्बन्धघटितव्यापकतावच्छेदकगो - त्वावच्छिन्नस्य भेदरूपाभावादित्यर्थः । समवायसम्बन्धावच्छिन्नगोत्वा भावस्य साधकत्वेपि तत्प्रतियोगितावच्छेदकगोत्वत्वाद्यग्रहदशायां तद भावस्य ज्ञानासम्भवेन ततस्सास्नाभावसिद्ध्यसम्भवादिति भावः । (गोत्वा वच्छिन्नत्वप्रकारकप्रतियोगिताज्ञाने अवच्छेद्यतायां निरूपितत्वसम्बन्धेन स्वरूपतो गोत्वप्रकारकत्वं दीधितिकारस्यासम्मतमेव, तथासत्यप्यग्रिम-ग्रन्थविरोधादित्यवधेयम्)। **एवञ्च** — अधिकरणत्वस्थाने सम्बन्धित्व निवेशे च । **गगनादेरपी** ति । तस्याधिकरणाप्रसिद्धावपि संयोगेन तत्सम्बन्धिवृत्तित्वस्याभावे तत्र च साध्यवत्सम्बन्धित्वस्य प्रसिद्ध्या यथोक्तव्याप्तिसत्त्वादिति भावः । वृत्त्यनियामकसंयोगव्यावृत्तरूपेण संयो-गस्याभावप्रतियोगितावच्छेदकसम्बन्धत्वेन साध्यतावच्छेदकसम्बन्धस्य गगनीयसंयोगस्याभावप्रतियोगितानवच्छेदकतया प्रतियोगितायां साध्यता वच्छेदकसम्बन्धावच्छिन्नत्वनिवेशकल्पे तथाविधप्रतियोगित्वाप्रसिद्ध्या संयोगेन गगनस्य न व्यापकता निर्वहतीत्यत उक्तम् **वृत्त्यनिया मकसंयोगमात्रस्ये** ति । तादृशसंयोगसाधारणसंयोगत्वावच्छिन्नस्येत्यर्थः ।

[दी] गितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्बन्धेन प्रतियोग्य सम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि, तदभाववतोपि पृथिव्यादेस्संयोगेन तत्सम्बन्धित्वात्, सिद्धिरपि तस्य तथैव, नतु वृत्तिनियामकसम्बन्धेन, तेनासम्बन्धित्वादव्यापकत्वाच्च,

---

यद्वेत्याद्युक्तकल्पे वृत्त्यनियामकसंयोगसाधारणरूपेण तादृशसम्बन्धत्व विरहेपि न क्षतिः, तन्मते प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशादित्याशयेनाह— **साध्यतावच्छेदकसम्बन्धेने** ति । **पृथिवीत्वादिव्यापकत्वमपी** त्यत्र संयोगेन गगनादेरित्यनुषज्यते । ननु प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे पृथिव्यादिनिष्ठ समवायादिसम्बन्धावच्छिन्नाभावप्रतियोगितया गगनादेर्न पृथिवीत्वादि व्यापकतासम्भव इत्यत आह— **तदभाववतोपी** ति । समवायादिना गगनाद्यभाववतोपीत्यर्थः । **तत्सम्बन्धित्वात्** — गगनादिसम्बन्धित्वात् । तथाच तादृशगगनाद्यभावो न साध्यतावच्छेदकसम्बन्धेन प्रतियोग्य सम्बन्धिहेतुमन्निष्ठ इत्यभावान्तरमादाय लक्षणसत्त्वं निष्प्रत्यूहमेवेति भावः । ननु संयोगेन गगनव्यापकत्वे बाधाद्यनवतारदशायां भ्रान्तस्य वृत्तिनियामकसंयोगेनैव कथं गगनानुमितिरित्यत आह । **सिद्धिरपी** ति । **तथैव**— वृत्त्यनियामकसंयोगेनैव । **तेनासम्बन्धित्वादि** ति । तथाच तादृशसम्बन्धावगाहनेऽनुमितेर्भ्रमतया तत्र भ्रमात्मकपरामर्शस्यापेक्षितत्वादिति भावः । 'यद्रूपावच्छिन्नयत्सम्बन्धस्य व्यापकताघटकत्वं तद्रूपावच्छिन्नतत्सम्बन्धेनैवानुमिति' रिति नियमाभिप्रायेण दोषान्तरमाह— **अव्यापकत्वाच्चे** ति । वृत्त्यनियामकेन सम्बन्धेनैव गगनाद्यभावस्य प्रतियोगिसमानाधिकरणतया वृत्तिनियामकसंयोगेन प्रतियोगिव्यधिकरणाभावप्रतियोगितया गगने सत्त्वेन तत्सम्बन्धस्य व्यापकत्वाघटकत्वादि-

[दी] व्यक्तीभविष्यति चेदमुपरिष्टात् । ननु अष्टद्रव्यातिरिक्तद्रव्यात्मककाल मात्रवृत्तिधर्मस्य विशेषणताविशेषणा—

---

त्यर्थः । तथाच व्यापकत्वाघटकसम्बन्धस्यानुमितावभानात् न तेनानुमिति प्रसङ्ग इति भावः । ननु वृत्तिनियामकसंयोगेन गगनादिसम्बन्धिनो ऽप्रसिद्ध्या कथं तेन सम्बन्धेन गगनाद्यभावस्य प्रतियोगिवैयधिकरण्य मित्यत आह– व्यक्तीभविष्यतीति । वक्ष्यमाणोऽन्याभावघटितप्रतियोगि वैयधिकरण्यं तत्रापि सुलभमिति भावः ।

कालिकविशेषणतया घटादिसाध्यके महाकालत्वादिहेतौ अप्रसिद्धि-निबन्धनाव्याप्तिं शङ्कते— नन्वि त्यादिना । खण्डकालवृत्त्यैतत्कालत्वादि हेतुकस्थले अतीतानागतव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नतादृशसम्बन्धा वच्छिन्नाभाव एव हेतुमति प्रतियोगिव्यधिकरणः प्रसिद्ध इति ना व्याप्तिरतः अष्टद्रव्यातिरिक्तद्रव्यात्मके ति । जन्यमात्रस्य कालोपाधि-तामते द्रव्यात्मकस्यापि खण्डकालस्य सम्भवात् महाकालपर्यन्तलाभ इत्यतोऽतिरिक्तान्तम् । यद्यपि गगनादिगात्ममनसां नित्यतया खण्डकाल त्वासम्भवेन चतुर्द्रव्यातिरिक्तेत्युक्तावपि महाकाललाभः । तथापि यत्किंचिच्चतुर्द्रव्यातिरिक्तत्वस्य पृथिव्यादावपि सत्त्वात्पृथिव्यादिचतुष्टयाति रिक्तत्वस्य विशिष्याभिधान एव तल्लाभः, तान्त्रिकैर्महाकालस्यैवाष्ट द्रव्यातिरिक्तद्रव्यपदेनाभिधानात् तथाभिधाने विशिष्यानभिधानेपि नान्य परत्वशङ्केति तथैवाभिहितम् । खण्डकालसाधारणमहाकालवृत्तेर्हेतुत्वे खण्ड कालरूपहेत्वधिकरण एव लक्षणघटकोक्ताभावप्रसिद्धिरिति कालमात्रवृत्ती त्यत्र मात्रपदम् । समवायादिना कस्यचित्साध्यत्वे समवायादिना घटाद्यभाव एव महाकाले तेन सम्बन्धेन प्रतियोगिव्यधिकरणः प्रसि-द्ध्यतीत्यतो विशेषणताविशेषेणे ति । कालिकविशेषणतयेत्यर्थः ।

[दी] व्याप्यवृत्ति किमपि व्यापकं न स्यात्; स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्तमानस्याभावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य

---

व्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्यानुपादानेन केवलान्वयिनित्य वाच्यत्वादिव्यापकतासम्भव इत्यत: **अव्याप्यवृती** ति । **कालिकसम्ब**न्धेनाव्याप्यवृत्तित्वं च व्यतिरेकिमात्रस्यैव, केवलान्वयिनोप्यनित्यस्य विश्व विषयकजन्यज्ञानविषयत्वादेर्बोध्यम् ! एतत्सर्वञ्च वस्तुव्याप्त्यभिप्रायेणाभि हितम् । अन्यवृत्तिहेतुके ऽन्यसम्बन्धेन साध्यतायांच हेतुमति सर्वत्र साध्यतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रस्यैव तेन सम्बन्धेन वृत्तित्वभ्रम दशायामनुमितिजनकज्ञानानुपपत्तिरपि द्रष्टव्या । एवं कालिकसम्बन्धेन व्याप्यवृत्तिसाध्यकेपि साध्यस्य तेन सम्बन्धेनाव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्याघटिताया: प्रतियोगिवैयधिकरण्यघटितायाश्च दुर्ग्रह त्वान्महाकालत्वादिहेतुकानुमित्यनुपपत्तिरपि ।

स्वावच्छेदकसम्बन्धेन स्वावच्छेदकविशिष्टानधिकरणहेत्वधिकरण वृत्त्यभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानिवेशकल्पे तादृश प्रतियोगित्वाप्रसिद्ध्यभिधानेनाव्याप्तिं स्फुटीकरोति— **स्वावच्छेदके** ति । **स्वम्**— प्रतियोगिता । **काले**— महाकाले । **तत्सम्बन्धावच्छिन्नत्वस्य**— कालिकसम्बन्धावच्छिन्नत्वस्य । **असम्भवा** दिति योजना । **कालिकसम्ब**न्धेन वृत्तिमन्मात्रस्यैव महाकाले वृत्तेरवृत्तेश्च तेन सम्बन्धेन सम्बन्धिनोऽप्रसिद्ध्या कस्यापि कालिकसम्बन्धावच्छिन्नाभावस्य प्रतियोगिता वच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमद्वृत्तित्वासम्भवेन समवायादि सम्बन्धावच्छिन्नघटाद्यभावस्य तथात्वात्तत्प्रतियोगितायाश्च समवायादि सम्बन्धेनैवावच्छिन्नत्वादिति भाव: । साध्यतावच्छेदकसम्बन्धेन प्रतियोग्य

[दी] तेन सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य च काले

---

सम्बन्धिहेतुमद्वृत्त्यभावीयसम्बन्धावच्छिन्नत्वाविशेषित [illegible] -रूपे तादृशसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमत एवाप्रसिद्धया ऽव्याप्ति रित्याह— तेने ति । तेन सम्बन्धेन-- कालिकसम्बन्धेन । गगनाद्यभावप्रति योगिनः तेन सम्बन्धेन सम्बन्धिरूपप्रतियोग्यप्रसिद्धया तेन सम्बन्धेन प्रतियोग्यसम्बन्धित्वासिद्धिं स्फुटीकर्तुं प्रतियोग्यसम्बन्धित्वस्येत्यनभिधाय यत्प्रतियोगिसम्बन्धि तदन्यत्वस्येत्यसमासेनाभिधानम् ।

अथ कालिकसम्बन्धेन महाकालान्यवृत्तित्वविशिष्टस्य तत्सम्बन्धा वच्छिन्नाभाव एव महाकाले प्रतियोगितावच्छेदकविशिष्टप्रतियोगि व्यधिकरणः प्रसिद्धः, तमादायैव च लक्षणसमन्वयात्कथमव्याप्त्यभि धानम् ? नहि महाकालान्यवृत्तित्वविशिष्टघटादिनिरूपितः कालिकसम्बन्धो महाकाले सम्भवति, तद्धर्मिवृत्तित्वविशिष्टनिरूपितसम्बन्धानुयोगितायास्तद्ध र्मिनियतत्वात्, अन्यथा सत्त्वादिमति गुणादौ द्रव्यादिवृत्तित्वविशिष्टसत्ता द्यभावप्रत्ययानुपपत्तेः; न चैवं ह्रदादिवृत्तित्वविशिष्टवह्न्याद्यभावादेर्विषयि तयासम्बन्धित्वं ज्ञाने न स्यात्, ज्ञानस्य ह्रदादिवृत्तित्वानिरूपकत्वादिति ह्रदो वह्निमानित्यादौ तादृशविशिष्टस्य बाधादिरूपस्य हेत्वाभासत्वं न स्यात्, ज्ञाननिष्ठविषयितया यादृशविशिष्टवत्त्वमनुमितिप्रतिबन्धकतावच्छेदकं तादृश विशिष्टस्यैव तथात्वात्; यदि च तत्सम्बन्धेन तद्धर्मिसम्बन्धित्वविशिष्ट निरूपितस्तादृशसम्बन्धो विशेषणकोटिप्रविष्टतद्धर्मिनियत इति सम्बन्धा न्तरेण ह्रदादिवृत्तित्वविशिष्टनिरूपितविषयितासम्बन्धो ज्ञाने सम्भवत्येवे त्युच्यते, तदापीच्छादिविषयत्वविशिष्टघटादिनिरूपितविषयितासम्बन्धस्य ज्ञाने ऽसम्भवादिच्छाविषयत्वाभावादिसाध्यकघटादिपक्षकस्थले तादृशवि-

शिष्टस्य बाधादिरूपस्य हेत्वाभासत्वानुपपत्तिर्दुर्वारैवेति वाच्यम्,—विशिष्ट निरूपितविषयितातिरिक्तसम्बन्धस्यैव विशेषणीभूतसम्बन्धितानिरूपकाधिकरणत्वनियतत्वोपगमात्, तद्धर्मविशिष्टतन्निरूपितविषयितायां तदंशे तद्धर्मप्रकारकत्वमात्रस्य अपेक्षितत्वादिच्छाविषयो घट इत्यादिज्ञाने इच्छाविषयत्वविशिष्टघटादिनिरूपितविषयितासत्त्वे बाधकाभावात्; न चैतदनुरोधेनैव विशेष्यवृत्तिघटकसम्बन्धेन विशेषणविशेष्योभयाधिकरणेपि विशिष्टाधिकरणत्वं स्वीक्रियते, प्रकृते च इच्छाविषयत्वतादृशघटयोर्द्वयोरपि विषयितासम्बन्धेन ज्ञाने सत्त्वात् तादृशविशिष्टाधिकरणत्वं ज्ञानेऽक्षतमेवेति नेच्छाविषयत्वविशिष्टघटादेः हेत्वाभासत्वानुपपत्तिः, इत्थं च कालिकसम्बन्धेन महाकालान्यत्वस्य महाकाले सत्त्वात् विशिष्टाधिकरणत्वं महाकाले वर्तत एवेति कथं विशिष्टाभावः प्रतियोगिव्यधिकरण इति वाच्यम्,— विशेष्यसम्बन्धेनोभयाधिकरणेपि विशिष्टाधिकरणत्वाङ्गीकारे घटपटोभयसंयुक्ते भूतले घटसमवायिकपालसंयुक्तत्वविशिष्टपटनिरूपिताधिकरणत्वप्रसङ्गात्;इच्छाविषयत्वं घटश्चेति समूहालम्बनेपि तादृशविशिष्टाधिकरणत्वसत्त्वापत्त्या प्रतिबन्धकतातिरिक्तवृत्तितया तस्य हेत्वाभासत्वानुपपत्तितादवस्थ्यादिति; नच महाकाले महाकालान्यवृत्तित्वविशिष्टघटाद्यधिकरणत्वानुपगमे विश्वाधारत्वव्याघात इति शङ्कनीयम्, तादृशविशिष्टनिरूपिताधिकरणताविशेषस्य महाकालेऽसत्त्वेपि घटादेर्घटत्वाद्यवच्छिन्ननिरूपिताधिकरणतासत्त्वेनैव सर्वाधारत्वोपपत्तेः ।

अत्र केचित्— कालिकसम्बन्धेनाधारता महाकालस्यैव नतु, सूर्यक्रियादेः, इदानीं घटः इदानीं पट इत्यादिप्रतीत्या क्रियादिरूपकालोपाधीनां महाकालनिष्ठाधारतावच्छेदकत्वस्यैवावगाहनात्, अत एव तेषां

कालविशेषणतया कालोपाधित्वप्रवादः, तादृशप्रतीत्या क्रियादावेव घटाद्याधारत्वावगाहित्वोपगमे तादृशप्रतीतीनां अनुगताधारतावगाहित्वानुभवविरोधात्, कालत्वेनाखण्डोपाधिना सर्वक्रियादीनामनुगतेन तादृशानुभवोपपादने महाकालस्यैवाप्रामाणिकतापत्तेः,– इति प्राचीनमताभिप्रायेणेयमव्याप्त्याशङ्का; तथा च सति कालिकसम्बन्धेन महाकालान्यवृत्तित्वस्यैवाप्रसिद्ध्या तद्विशिष्टघटाद्यभावमादाय लक्षणगमनासम्भवात् । नच क्रियादेः कालत्वानभ्युपगमेन तदभिप्रायेण चेदयं ग्रन्थः तदा ऽष्टद्रव्यातिरिक्तद्रव्यात्मकताया अव्यावर्तकतयाऽभिधानासङ्गतिरिति वाच्यम्, तादृशद्रव्यात्मक एव काल इति मतविशेषसूचनार्थकतया तत्सङ्गतेः । तन्मात्रवृत्तित्वं च हेतोर्लक्ष्यतासम्पादकत्वेनाभिहितम्, इतरवृत्तेर्व्यभिचारित्वात् । अथवा भवतु कालोपाधिरपि कालिकसम्बन्धेनाधिकरणम्, तदधिकरणत्वसाधकश्चेदानीं घट इदानीं पट इत्यादिः प्रत्ययो व्यवहारश्च, तस्य चाऽननुगतोपाधिमात्रविषयकत्वे ऽनुगताधारत्वावगाहित्वानुपपत्त्या क्रियारूपोपाधिविशिष्टमहाकालस्य घटाद्याधारतावगाहित्वमावश्यकम्, विशिष्टघटाद्याधारत्वावगाहित्वे विशिष्टान्तर्गतविशेषणेपि तदवगाहित्वमावश्यकमिति खण्डकालस्य कालिकसम्बन्धेनाधारतासिद्धिः, एवञ्चेदानीं महाकालान्यवृत्तित्वविशिष्टो घट इति प्रत्ययादिः खण्डकाले विशिष्टाधारतायां मानं न त्वन्य इति तत्र तत्साधकप्रत्ययबलादेव महाकालान्यवृत्तित्वानिरूपकस्यापि महाकालस्य विशिष्टाधारत्वसिद्धिर्दुर्वारैव, तथा च महाकाले विशिष्टघटाभावोपि विशिष्टप्रतियोगिसमानाधिकरणः, तादृशप्रतीत्यनभ्युपगमे खण्डकाले न विशिष्टप्रतियोग्यधिकरणत्वप्रसिद्धिरित्युक्तस्थले ऽव्याप्तिवारणमशक्यमित्याहुः ।

अन्ये तु— कालिकस्सम्बन्धः स्वरूपानतिरिक्तः, तथाच खण्डकालमहाकालानुयोगिकतादृशसम्बन्धानां तत्तत्स्वरूपाणां अनुगमकसम्ब

[दी]ऽसम्भवात् । नच तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्य वृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यम्, तथाचावृत्तिगगनाद्यभावद्वारिकैव तत्सिद्धिः,

---

न्धतावच्छेदकाभावेन प्रत्येकमेव सम्बन्धता, तथाच महाकालस्वरूप सम्बन्धेनैव घटादेः महाकालत्वादिव्यापकता वाच्येति दुरुद्धरैवाऽव्याप्तिः, तादृशसम्बन्धेन महाकालान्यवृत्तित्वस्याप्रसिद्धेरिति वदन्ति; तदसत्, स्वरूपाणां प्रातिस्विकरूपेण सम्बन्धत्वे यत्किञ्चित्खण्डकालस्वरूपसम्बन्धेन साध्यतायां तादृशखण्डकालमात्रवृत्तिहेतुकेऽपि प्रतियोगिव्यधिकरणाभावाप्रसिद्धिसम्भवान्महाकालमात्रवृत्तिहेतुकानुधावनस्य निर्बीजत्वापातात् ।

परेतु- साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यविषयकानुमित्यौपयिक व्याप्तावेव प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैय्यधिकरण्यनिवेशः, न तु साध्यतावच्छेदकोपलक्षितसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तौ अन्यथा, महाकाले पृथिव्यादिवृत्तित्वोपलक्षितजात्यनुमानानुपपत्तेः, साध्यतावच्छेदके प्रतियोगितावच्छेदकाविशिष्टप्रतियोगिव्यधिकरणभावप्रतियोगितावच्छेदकत्वात्, इत्थञ्च साध्यतावच्छेदकोपलक्षितस्य यत्र साध्यता तत्रैवा व्याप्तिशङ्कापरोऽयं ग्रन्थः, तत्र यथाश्रुतप्रतियोगिवैय्यधिकरण्यस्यैव निवेशेन महाकालान्यवृत्तित्वविशिष्टघटाभावस्यापि लक्षणघटकत्वादित्याहुः; तदपि न साधु, अग्रिमविशिष्टपदोपादानतद्व्यावृत्तिप्रदर्शनादिविरोधात् । **तादृशसम्बन्धेन**— प्रतियोगितावच्छेदकसम्बन्धेन साध्यतावच्छेदकसम्बन्धेन वा । **वक्तव्यम्**— अभावविशेषणतयाऽभावपूर्वप्रतीकेन विवक्षणीयम् । **गगनाद्यभावद्वारिकैवे** ति । तत्प्रतियोगिनः कालिकसम्बन्धेनाधिकरणाप्रसिद्ध्या तदनधिकरणत्वाप्रसिद्धावपि वृत्तिमति प्रसिद्धायाः

[दी] सत्ताद्यधिकरणकर्मादौ समवायेन ज्ञानसामान्यस्य संयोगसामान्यस्य चावृत्तेर्नातिप्रसङ्गः,

---

कालिकसम्बन्धेन महाकालवृत्तिताया: अभावस्य तत्र प्रसिद्धत्वादिति भावः । ज्ञानवान् सत्त्वात् संयोगी सत्त्वादित्यादौ क्रमेण सम्बन्धविशेषनिवेशयत्किञ्चित्पदोपादानयोर्व्यावृत्तिमाह— सत्ताद्यधिकरणे ति । सम्बन्धविशेषानुपादाने कर्मादौ समवायेन ज्ञानाभावप्रतियोगिनो ऽवृत्तावपि विषयतासम्बन्धेन वृत्तेस्तादृशाभावो न लक्षणाघटकः स्यात्,कर्मादौ संयोगाभावप्रतियोगिनोऽसत्त्वेपि हेत्वधिकरणद्रव्यवृत्तितया हेत्वधिकरणवृत्तित्वसामान्याभावासत्त्वात् सोपि न तथा स्यादित्यभावान्तरमादायातिव्याप्तिप्रसक्तिरिति भावः । यद्यपि यत्किंचित्पदस्य व्यावृत्तिः ज्ञानसाध्यकेपि सम्भवति, ज्ञानस्य समवायेनाव्याप्यवृत्तितया तत्साध्यकेपि प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकत्वात् , तथापि प्रसिद्धाव्याप्यवृत्तिसाध्यके व्यभिचारिणि संयोगी सत्त्वादित्यादौ तदनुक्तौ तत्र व्यावृत्तिर्न सम्भवतीति शङ्का स्यात् तन्निराकरणाय तत्र तत्प्रदर्शनम् ।

केचित्तु – संयोगसाध्यके आदिपदग्राह्यगुणान्यत्वविशिष्टसत्ताहेतुके साध्यतावच्छेदकसम्बन्धस्यैव व्यावृत्तिप्रदर्शनपरम्, संयोगसामान्यस्य चेत्यपि विषयिताया वृत्त्यनियामकत्वे प्रतियोगिवैयधिकरण्ये सम्बन्धित्वानिवेशपक्षे पूर्वस्थलीयव्यावृत्त्यसङ्गतेरित्यस्वरसादेव संयोगाभावस्य कालिकसम्बन्धेनैव सर्वत्र कर्मणि प्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिप्रसक्तिरिति वदन्ति ; तदसत् , उक्तास्वरसेन पूर्वमपि ज्ञानसाध्यकं परित्यज्य स्थलान्तरानुसरणादत्र निर्बीजतादृशस्थलपरित्यागेन सन्दर्भविरोधात , आदिपदेन हेतोस्साध्यस्य च विशेषशब्देनोपादानस्यायुक्तत्वाच्च ।

[दी] भूतत्वमूर्तत्वोभयत्वविशिष्टगुणकर्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्ता दिकन्तु न मनोगुणादिवृत्ति, संयोगसामान्यञ्च न यत्किंचिद्द्रव्यावृत्तीति वाच्यम्,—

---

प्रतियोगितावच्छेदकविशिष्टत्वोपादानस्य पूर्वोक्तस्थल एव व्यावृत्तिं स्मारयति । भूतत्वे ति । यद्यपि पूर्वं विशिष्टसाध्यकेऽतिव्याप्ति प्रदर्शनोत्तरं विशिष्टस्यातिरिक्ततापक्षे तदसङ्गतेरस्वरसादुभयसाध्यकाति व्याप्तिर्दर्शिता, तथापि द्वन्द्वे अल्पाक्षरस्य पूर्वनिपातनियमादुभयत्वविशिष्टान्तस्य प्रागभिधानम् । अत्र पूर्वस्थले द्वित्वावच्छिन्नप्रतियोगिताया व्यासज्यवृत्तित्वोपगमे ऽतिव्याप्तिर्न सम्भवतीत्यस्वरसेनैव द्वितीयस्थलाति व्याप्त्यवतारणं पूर्वाभिप्रायविरोधादनुपादेयम् । **न मनोगुणादिवृत्ती** ति । एकविशेषावच्छिन्ने तद्वृत्तित्वसत्त्वेपि तद्वृत्तितानवच्छेदकविशेषान्तरावच्छिन्ने तत्र तद्वृत्तित्वाभावोऽक्षत एव, एकरूपावच्छिन्न एव तत्तदभावयोर्विरोधेनावृत्तेरित्यभिमानः । नचैवं विशिष्टान्तानुपादानेपि सत्तादौ विशिष्टसत्तात्वादिना गुणाद्यवृत्तित्वसत्त्वेन विशिष्ट सत्ताद्यभावस्य लक्षणघटकतया ऽतिव्याप्त्यप्रसक्तेर्न विशिष्टान्तर्व्यावृत्तिसम्भव इति वाच्यम्, प्रतियोगिनि किञ्चिद्रूपावच्छिन्ने हेत्वधिकरण यत्किंचिद्व्यक्तिवृत्तित्वाभावस्य लक्षणघटकत्वे सत्तावान् द्रव्यत्वादित्यादावपि सत्तात्वाद्यवच्छिन्नाभावस्य लक्षणघटकत्वापत्त्याऽव्याप्त्यापत्तेः हेत्वधिकरणावृत्तित्वस्य तद्वृत्तिभिन्नत्वरूपस्यैव निवेशनीयतया विशिष्ट सत्तावान् जातेरित्यादौ विशिष्टसत्ताद्यभावस्य लक्षणघटकत्वानिर्वाहेणाति व्याप्तिवारणासम्भवाद्व्यावृत्तिसङ्गतेः । सामान्यपदप्रयोजनमाह — **संयोगसामान्यञ्चे** ति । संयोगी द्रव्यत्वादित्यादौ संयोगत्वावच्छिन्नाभावप्रतियोगियत्किंचित्संयोगव्यक्तेर्हेत्वधिकरणयत्किंचिद्घटादिव्यक्त्यवृत्ति

[दी] विशिष्टस्यानतिरिक्तत्वात् ;

---

त्वसत्त्वेपि तत्प्रतियोगिसामान्ये तदसत्त्वेन तादृशाभावस्य लक्षणाघटकतया नाऽव्याप्तिरित्यर्थः । विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावो ऽप्रामाणिक इत्याशयेन दूषयति **विशिष्टस्यानतिरिक्तत्वा** दिति । तथाचोभयत्वादिविशिष्टस्य मूर्तत्वादेश्शुद्धमूर्तत्वानतिरिक्ततया मूर्तत्वादिवृत्तेर्मनोवृत्तित्वादेरभावस्य उभयत्वादिविशिष्टेपि तस्मिन्नसम्भवाद्भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादावतिव्याप्तिर्विशिष्टान्तोपादानेपि दुर्वारैवेति भावः । नच भूतत्वमूर्तत्वोभयं न मनसि गुणान्यत्वविशिष्टसत्ता न गुणे इत्यादिसर्वानुभवसिद्धप्रतीतिबलाद्द्वित्वविशिष्टसत्तात्वाद्यवच्छिन्ने मनोगुणादिवृत्तित्वाभावसिद्धेरावश्यकत्वान्नातिव्याप्तिरिति वाच्यम् , तादृशप्रतीत्या मनोगुणाद्यधिकरणकद्वित्वविशिष्टसत्तात्वाद्यवच्छिन्नाभावस्यैवावगाहनात् , जातौ न किञ्चित्समवैतीति निश्चयदशायां जातौ न भूतत्वमूर्तत्वोभयं नवा विशिष्टसत्ता इति प्रतीतिवत् मनसि गुणे न किञ्चित्समवैतीति भ्रमदशायामपि तादृशप्रतीतेरानुभाविकतया मनो गुणादिसमवेतत्वाभावस्य तद्विषयकत्वासम्भवेन मनोगुणाद्यधिकरणकाभावस्य तद्विषयताया आवश्यकत्वात् तादृशभ्रमाभावकालीनतदाकारप्रतीतावपि तस्यैव विषयत्वौचित्यात् , अन्यथा कल्पनागौरवापत्तेः, भूतत्वमूर्तत्वोभयं न मनोवृत्ति गुणाद्यन्यत्वविशिष्टसत्ता न गुणवृत्तिरित्यादिप्रत्ययाश्च तादृशोभयत्वविशिष्टसत्तात्वादौ मनोगुणादिवृत्तित्वावच्छेदकत्वाभावं तादृशवृत्तित्वे तादृशोभयत्वविशिष्टत्वाद्यवच्छेद्यत्वाभावं वा ऽवगाहन्ते ; तत्र तादृशाभावस्य क्लृप्तत्वात । नच यत्किञ्चिद्धेत्वधिकरणवृत्तितानवच्छेदकस्वप्रतियोगितावच्छेदककत्वमेव विवक्षणीयम् , उभयत्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकोभयत्वादेश्च मनोगुणादिवृत्तितानवच्छेदकत्वात्तादृशाभावसंग्रहेण नाति

[दी] समवायेन जातेस्साध्यत्वे मेयत्वादावतिव्याप्तेश्च, जातिमन्निष्ठतादृशाभावप्रतियोगितायां जातित्वेनानवच्छेदात्; जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः । संयोगादिसाध्यकगुणकर्मान्यत्वादौ चातिव्याप्तिः, अद्रव्ये हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः,

---

व्याप्तिरिति वाच्यम्; गुणान्यत्वविशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकस्य वैशिष्ट्यसहितसत्तात्वस्य गुणादिवृत्तितावच्छेदकशुद्धसत्तात्वाद्यनतिरिक्ततया तदनवच्छेदकत्वासम्भवेनोक्तविवक्षयापि तादृशाभावसङ्ग्रहासम्भवात् । यदभावीयप्रतियोगितावच्छेदकतायां यत्किंचिद्धेत्वधिकरणवृत्तितावच्छेदकत्वपर्याप्त्यवच्छेदकावच्छिन्नपर्याप्तताविरहः तादृशाभावनिवेशे दर्शितातिव्याप्तिपरिहारस्सम्भवतीत्याशङ्क्य दूषणान्तरमाह— **समवायेने** ति । **जातिमन्निष्ठतादृशाभावे** ति । जातिमन्निष्ठो यो घटत्वाद्यभावः तस्यैव पटाद्यसमवेतप्रतियोगिकत्वेन तत्प्रतियोगितायां जातित्वस्यानवच्छेदकत्वादित्यर्थः । जातिमदवृत्तेर्जातित्वावच्छिन्नाभावस्य तादृशत्वं न सम्भवतीति स्फुटयति— **जातिशून्ये चे** ति । **तादृशसम्बन्धेन**— समवायेन । **अप्रसिद्धे** रिति । तथाच जातिमदवृत्तिर्योऽभावस्तत्प्रतियोगिसामान्ये हेतुमद्यत्किंचित्पदेन जातिशून्यमेवोपादायावृत्तित्वान्तं घटनीयम्, तच्च न सम्भवति, प्रतियोग्यप्रसिद्ध्या तदप्रसिद्धेरिति नासौ लक्षणघटक इति भावः । जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यविशेषणस्य प्रयोजनविरहेणानिवेशेनोक्तदोषानवकाश इत्यव्याप्यवृत्तिसाध्यक एवातिव्याप्तिमाह— **संयोगादी** ति । **अतिव्याप्ति** रिति । संयोगत्वाद्यवच्छिन्नाभावस्य हेत्वधिकरणयत्किंचिद्यदवृत्तिसमवेतप्रतियोगिसामान्यकत्वासम्भवेन लक्षणाघटकत्वादिति भावः । तदसम्भवमेव स्फुटयति— **अद्रव्य** इति । **हेतुमती** ति । सामान्यादावित्यर्थः । **अप्रसिद्धे** रिति ।

# विषयसूची।

# शास्त्रमुक्तावली.

THE

# SASTHRAMUKTHAVALI.

(A COLLECTION OF VEDANTA MIMAMSA AND NYAYA WORKS)

EDITED BY

**P. B. ANANTHA CHARIAR**

PRINTED AT THE
SRI SUDARSANA PRESS
CONJEEVERAM.

८४

श्रीकाञ्ची प्रतिवादिभयङ्करं अनन्ताचार्येण परिशोधिता,

श्रीसुदर्शनमुद्राक्षरशालायां
सम्मुद्र्यते ।

॥ श्रीकाञ्ची ॥



अस्या वार्षिकमूल्यम् , रू. ५—६—०.

श्रीरस्तु ॥

## शास्त्रमुक्तावळी ॥

वात्स्यश्रीवरदगुरुविरचितं

# यतिलिङ्गसमर्थनम् ।

(*)

गुरवे वरदार्याय कुर्वीमहि नमस्क्रियाम् ।
यत्पदाम्बुजसेवा नः सूते वेदान्तसम्पदम् ॥

इह खलु कुटीचकबहूदकहंसपरमहंसानां चतुर्णां चरमाश्रमिणां उपवीत-त्रिदण्डशिखादि लिङ्गं साधारणम्, वृत्तिभेदस्तु तेषां भेदक इति निर्णीयते ॥

तथाहि- शाट्यायनकोपनिषदि[1] तावच्छ्रूयते—

"अथ ह यद्[2]ब्रह्म परमं सनातनं ये श्रोत्रिया अकामहता अधीयुः । शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजिज्ञा[3]स्यमानः । त्यक्तैषणो ह्यनृणस्तद्विदित्वा[4] मौनी वसेदाश्रमे[5] यत्र तत्र । अथाश्रमं चरमं सम्प्रविश्य[6] स च द्वितीयममृतं सम्प्रयाति । अखिलं विश्वं ब्रह्मभावं विचार्य चरेत्

(१) शाट्यायनीयोपनिषत्— इति काचिदुपनिषन्मद्रपुरे आन्ध्राक्षरैर्मुद्रिता वर्तते । तस्यामपीयं श्रुतिर्दृश्यते । पाठभेदास्तु सन्ति । किं शाट्यायनकोपनिषद एव शाट्यायनीयेति नामान्तरम्, अथान्यैव सेति निश्चयस्य सामग्री नास्ति । मुक्तिकोपनिषदि तु "शाट्यायनी हयग्रीवं" इति पठ्यते । अतश्चात्र शाट्यायनीयोपनिषत्पाठस्यास्य च यो भेदस्सोऽधस्तात्प्रदर्श्यते । (२) यत्परं ब्रह्म सनातनम्— इति शाट्यायनीय पाठः । (३) ह्यभिजज्ञौसमानः— शा+य पाठः । (४) तं विदित्वा— शा+य पाठः । (५) वसेदाश्रमे यत्रकुत्र— शा+य पाठः । (६) यथोपपत्तिं पञ्चमात्रा दधानः । इति पाठः । एतदनन्तरं च "त्रिदण्डमुपवीतं च" इत्यादिरेकः श्लोकः पठ्यते । "स च द्वितीयममृतं सम्प्रयाती" त्यारभ्य "तदत्र श्लोकौ भवतः" इत्येतदन्तं नास्ति । "पञ्चैतास्तु यतेर्मात्रास्ता मात्रा ब्रह्मणः श्रुता । न त्यजेद्यावदुत्क्रान्तिरन्तेपि निखनेत्सह । विष्णुलिङ्गं द्विधाप्रोक्तं व्यक्तमव्यक्तमेव च । तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ।" इति च पठ्यते ।

पृथिव्यां विष्णुलिङ्गी निगूढः । परमहंसमाश्रमं सम्प्रविश्य यथोपपत्ति पञ्च मात्रा दधानः । तदत्र श्लोकौ भवतः—

त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् ।
शिक्यं कवचमित्येतत् बिभृयाद्यावदायुषम् ॥
त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् ।
निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥

इति । अथ खलु सोम्य कुटीचको बहूदको हंसः परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति । सर्वे विष्णुलिङ्गधराः सदा स्वात्मानमात्मना ब्रह्म भावं भावयन्तः शुचयः स्वधर्मनिरताः त्रैकाल्योपासकाः जपशीलाः ध्यानशीलाः समाधिशीलाः पुण्यदेशे सुप्रसिद्धे तीर्थे समृद्धे निस्तपत्ता वसन्तो नियमवन्तः सुशीलिनः सुखिनः पुण्यश्लोका भवन्ति । ” इति ।

आह पराशरः— “तत्र परिव्राजकाश्चतुर्विधा भवन्ति— कुटीचका बहूदका हंसाः परमहंसाश्चेति । तत्र कुटीचका नाम— पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमोहमदमात्सर्यादीन् सम्परित्यज्य विधिवत्संन्यासं कृत्वा त्रिदण्डजलपवित्रकाषायवस्त्रधारिणः स्नानशौचाचमनाध्यायब्रह्मचर्यध्यानतत्पराः पुत्रादेरेव भिक्षाकाले अन्नं यात्रामात्रमुपयुञ्जानाः तस्यां कुटौ नित्यं वसन्तः आत्मानं मोक्षयन्ते । बहूदका नाम— त्रिदण्डकमण्डलुजलपवित्रपात्रशिक्ययज्ञोपवीतिनो वेदान्तार्थावबोधकाः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षचर्यां चरन्तः आत्मानं मोक्षयन्ते । हंसा नाम— त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतरक्तकाषायवासिनः गोमूत्रगोमयाहाराः एकरात्रं त्रिरात्रं षड्रात्रं मासोपवासपक्षोपवासकृच्छ्रातिकृच्छ्रचान्द्रायणसान्तपनमहासान्तपनपराकतुलापुरुषादीनि व्रतानि चरन्तः गोद्विजाढ्येषु पुण्येषु देशेषु वसन्तः आत्मानं मोक्षयन्ते । परमहंसा नाम — त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतिनः अन्तर्वासोबहिर्वासधारिणः

---

(७) पवित्र मिति—ग्रा+य पाठः ।

(८) सर्वे एते विष्णुलिङ्गिनश्शिखिनोपवितिनश्शुद्धचित्ता आत्मानमात्मना ब्रह्म भावयन्तश्शुद्धचिद्रूपोपासनरता जपयमवन्तो नियमवन्तस्सुशीलिनः पुण्यश्लोका भवन्ति । इति— ग्रा+य पाठः ।

ग्रामैकरात्रवासिनः नगरतीर्थावसथेषु पञ्चरात्रं षड्रात्रं क्षारलवणवर्जं भिक्षाकाले शीर्णपर्णपुटं कृत्वा ब्राह्मणकुलादेव भैक्षं गृहीत्वा अष्टौ ग्रासानेव भुञ्जानाः सन्ध्योपासनतत्परा नित्यं वृक्षमूले वसन्त आत्मानं मोक्षयन्ते । " इति ।

हारीतः–

" चतुर्विधा भिक्षवस्तु स्मृतास्सामान्यलिङ्गिनः ।
तेषां पृथक् पृथक् नाम वृत्तिभेदात् कृतं श्रुतौ ॥
कुटीचको बहूदश्च हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंसो यो यः पश्चात् स उत्तमः ॥
लिङ्गं तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम् ॥ " इति ।

वसिष्ठः–

" यज्ञोपवीती उदकमण्डलुहस्तः " इति ।

उशनाः–

ब्रह्मसूत्रपरित्यागात् ब्रह्मचारी गृही वनी ।
परिव्राट्चापि पतति तस्मात् तन्न परित्यजेत् ॥

अत्रिः– पारिव्रज्यमेवाधिकृत्याह–

" ब्रह्मसूत्रं त्रिदैवत्यं ब्रह्मविष्णुशिवात्मकम् ।
परित्यजन्ति विप्रा ये मोहात्तर्कोपजीविनः ॥
स्वर्गापवर्गमार्गाभ्यां प्रच्युतास्ते न संशयः " ।

मेधातिथिः—

गृहीतं यत् त्रिदण्डादि अविनष्टं तु न त्यजेत् ।
समुद्रं गच्छस्वाहेति विनष्टं प्रक्षिपेज्जले ।
प्रक्षिप्य चान्यदादद्यात् गायत्र्या प्रणवेन वा ॥
तच्छंयोरित्युपवीतं अब्लिङ्गाभिः कमण्डलुम् । "

अङ्गिराः–

यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः ।
ब्रह्मसूत्रं त्रिदण्डं च वस्त्रं जन्तुनिवारणम् ॥
शिक्यं पात्रं बसीञ्चैव कौपीनं कटिवेष्टनम् ।
यस्यैतद्विद्यते लिङ्गं स यतिर्नेतरो यतिः ।

स एव–

यतीनां त्रीणि शुक्लानि भवन्त्येनानि नित्यशः ।
यज्ञोपवीतं दन्ताश्च तथा जन्तुनिवारणम् ॥

शौनकः–

अथ ' युवा सुवासा ' इति काषायवासः ' सखा मे गोपाये ' ति त्रिदण्डं गृह्णाति, ' तच्छंयोरावृणीमह ' इति यज्ञोपवीतम् ।

अत्रिः–

त्यक्त्वा यज्ञोपवीतं तु षट्कृच्छ्राणि समाचरेत् ॥

वृद्धजाबालिः–

हीनो यज्ञोपवीतेन यदि स्यात् ध्यानभिक्षुकः ।
तस्य क्रिया निष्फलास्स्युः प्रायश्चित्तं विधीयते ॥
गायत्रीसहितानेव प्राजापत्यान् षडाचरेत् ।
पुनस्संस्कारमाहृत्य धार्यं यज्ञोपवीतकम् ॥

हारीतः–

" विना यज्ञोपवीतेन यत्कृतं भोजनादिकम् ।
तत्पापप्रशमायालं प्रायश्चित्तं ब्रवीमि वः ॥
तेषां तु भोजनादीनां प्रत्यहं सुसमाहितः ।
सहस्राद्यैरसुश्रमैः विधिपूर्वं कृतैश्शुचिः ॥

दत्तात्रेयः–

मोक्षाश्रमे स्मृतं वस्त्रं रक्तं यद्धातुरञ्जितम् ।
धार्यं यज्ञोपवीतं तु सित नवगुणान्वितम् ॥

इत्यादिश्रुतिस्मृतिभिः कुटीचकादीनां चतुर्णां चरमाश्रमिणां अविशेषेण यज्ञोपवीतस्य सन्धार्यत्वाभिधानात्, अधारणे प्रायश्चित्ताभिधानाच्च तत्तावद्ववश्यं धार्यमित्यवगम्यते ।

यदुक्तम्– कैश्चित् " नखानि निकृत्य यज्ञोपवीतं विसृजे " दिति श्रुत्या यज्ञोपवीतधारणं वैकल्पिकमिति । तदयुक्तम्, " नखानि निकृत्य पुराणयज्ञोपवीतकमण्डलून् त्यक्त्वा नवान् प्रगृह्याश्रमं प्रविशे " दिति श्रुत्या त्यागग्रहणयोः छागपशुन्यायेन पदाहवनीयन्यायेन च पुराणनूतनविषयत्वाव

गमेनाविरोधात् । विरोधे सति हि विकल्पः । पूर्वोदाहृतश्रुतिस्मृतिभिः उभयो भिन्नविषयत्वं सुस्पष्टम् । किञ्च– सम्भवति, गत्यन्तरे ऽष्टदोष दुष्टविकल्पस्वीकारो न साधीयान् । न च गुरुलघुविकल्पसम्भवः, लघौ सति गुरौ नियमेनाप्रवृत्तेः । किञ्च– यज्ञोपवीतं विसृजे दिति हि श्रूयते, न तु न गृह्णीयादिति, अतोऽनेनैव वाक्येन त्यागस्य पूर्वधृतविषयत्वं स्वध्यवसानम् । नूतनोपवीतग्रहणं तु समन्त्रकं वचनान्तरैः विधीयमानं दण्डादिग्रहणवत् दुर्वारम् । " बहिस्सूत्रं परित्यजे " दित्यपि पुराणब्रह्मसूत्रत्यागविषयम् । यद्वा— सूत्राद्बहिर्भूतं स्वन्त्यजेदित्यस्यार्थः । अतो यज्ञोपवीतधारणमपि न वैकल्पिकम् । " यज्ञोपवीत विसृजे " दिति विज्ञाने श्वरवचनं स्वपक्षाभिनिवेशकारितम् । " निषिद्धभक्षणं जैह्मं " इत्यादिसामान्य विषयवचनानां " छत्राकं विड्वराहं च " त्यादिवचनप्रतिपन्नविशेषमात्रपर्यव सायित्वं हि तेनैव दर्शितम् ।

अत्र कश्चिदाह– उपवीतादिपरित्यागवचनं परमहंसाभिधानयतिविशेष विषयमिति । तदयुक्तम्, शाट्यायनकादिश्रुत्या पराशरादिस्मृत्या च तस्या पीतरवदुपवीतादिधारणविधानात् । नचास्य कुटीचकादिभ्यो लिङ्गतो भेदः, अपि तु वृत्तित एव । तदाह दत्तात्रेयः–

" चतुर्विधा भिक्षवस्तु प्रख्याता ब्रह्मणो मुखात् ।
कुटीचको बहूदको हंसश्चैव तृतीयकः ॥
चतुर्थः परमहंसश्च सञ्ज्ञाभेदैः पृथक् स्मृताः ।
वृत्तिभेदेन भिन्नास्ते नैव लिङ्गात्तु ते द्विजाः ॥ "

हारीतोपि–

चतुर्विधा भिक्षवस्तु स्मृतास्सामान्यलिङ्गिनः ।
तेषां पृथक् पृथक् नाम वृत्तिभेदात् कृतं श्रुतौ ।
कुटीचको बहूदश्च हंसश्चैव तृतीयकः ।
चतुर्थः परमो हंसो यो यः पश्चात् स उत्तमः ॥ "

इति । वृत्तिभेदश्च 'कुटीचकानाम' इत्यादिभगवत्पराशरस्मृतौ प्रागुदाहृतो द्रष्टव्यः ।

यदुक्तं हारीतादिवचनं यथाकथंचित् कुटीचकबहूदकहंसपरं योजनीय मिति; तदयुक्तम्, प्रत्यक्षश्रुत्याद्यनुसारिमुख्यार्थपरिग्रहे बाधकाभावात् । सा च पूर्वमेवोदाहृता ।

ननु परमहंसो नाम नोक्तलक्षणः, स तु अन्यादृशः कश्चित्, यस्य उपवीतादिवर्जनं एकान्ततः श्रुतिर्विदधातीति ? केयं श्रुतिः तपस्विनी ? यामवलम्ब्य वल्गसि । बहुस्मृत्येककण्ठप्रत्यक्षश्रुतिविरुद्धा कथमिवासौ सम्भावनापदवीमधिरोहति । किञ्च त्वत्पक्षपातिना विज्ञानेश्वरेण उपवीतादित्यागधारणविकल्पाभ्युपगमात्, अन्यैश्च त्वत्पक्षप्रतिक्षेपकैः भास्कराचार्ययादवप्रकाशमस्करिप्रभृतिभिश्चानुदाहरणात्, स्मृतीनां तद्धारणविधानैककण्ठ्यात् अध्येतृभिरधीयमानत्वाच्च एकान्तनिषेधश्रुतेरसम्भव एव । यत्तु केनचित्तदुपजीविना ऽत्यन्तनिषेधपरत्वेन व्यासादिवचनमित्युदाहृतम्; तदपि तत्तत्कोशेष्वदर्शनात् उदाहृतश्रुतिस्मृतिविरोधात् पूर्वव्याख्यातृभिरनुदाहृतत्वाच्च स्वकपोलकल्पित मिति द्रष्टव्यम् । अतः चतुर्णामपि यतीनां उपवीतमवश्यं धार्यमिति सिद्धम् ।

## इति यतिलिङ्गसमर्थने प्रथमस्स्कन्धः ।

---

एवमेतैर्दण्डत्रयमपि धार्यम् । तत्र श्रुतिस्तावत्- शाट्यायनकोपनिषदेव "अथ परमहंसमाश्रमं सम्प्रविश्य" इत्यारभ्य "इति वेदानुशासनम्" इत्येवमन्ता । अस्यामेवोपनिषदि "अथ खलु सोम्य कुटीचको बहूदको हंसः परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति, सर्वे विष्णुलिङ्गिनः" इत्यादि च।

स्मृतयश्च तथा । तत्र पराशरः- "तत्र परिव्राजकाश्चतुर्विधा भवन्ती" त्यारभ्य, "वृक्षमूले वसन्त आत्मानं मोक्षयन्त" इत्येवमन्तम् ।

हारीतः-

"त्रिदण्डं वैणवं सौम्यं सत्वचं समपर्वकम् ।
वेष्टितं कृष्णगोवालरज्ज्वा तु चतुरङ्गुलम् ॥

स एव– नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः ।
एकन्तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥
गृहीत्वा विचरेत्तावत् यावल्लभ्यं त्रिदण्डकम् ।
यत्नेनान्वेषयेन्नित्यं अप्रमत्तस्समाहितः ॥ "

मेधातिथिः–
यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेत् ।
यत्नेनान्वेषयेन्नित्यमप्रमत्तस्समाहितः ॥ "

शाण्डिल्यः–
त्रिविधादाश्रमाद्विप्रो मनो मोक्षे निवेशयेत् ।
आत्मन्यग्नीन् समारोप्य संन्यसेद्विधिपूर्वकम् ॥
दण्डानि त्रीणि संहृत्य धारयेद्विधिपूर्वकम् ।

दक्षबृहस्पती—
मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो यष्टिवेदाभ्यां नखरोमैर्वनाश्रितः ॥
त्रिदण्डेन यतिश्चेति लक्षणानि पृथक् पृथक् ।
यस्यैतल्लक्षणं नास्ति प्रायश्चित्ती नचाश्रमी ॥

अत्रिः––
चतुर्विधा भिक्षवस्तु व्याख्याता ब्रह्मणो मुखात् ।
कुटीचको बहूदश्च हंसश्चैव तृतीयकः ॥
चतुर्थः परमो हंसः संज्ञाभेदैः पृथक् स्मृताः ।
वृत्तिभेदेन भिन्नास्ते नैव लिङ्गात्तु ते स्मृताः ॥
लिङ्गं तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम् ।
त्रिदण्डेन यतिश्चेति लक्षणं हि श्रुतं स्मृतौ ॥

दत्तात्रेयः–
त्रिदण्डिरूपधृग्विप्रः साक्षान्नारायणस्स्मृतः ।
यस्तं पूजयते भक्त्या विष्णुस्तेन प्रपूजितः ॥
अष्टाक्षरेण मन्त्रेण नित्यं नारायणात्मना ।
नमस्यो भक्तिभावेन विष्णुरूपी त्रिदण्डधृक् ॥

त्रिदण्डं लिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः ।
यो हि ब्रह्म न जानाति त्रिदण्डार्हो न स स्मृतः ॥
त्रिदण्डानङ्गुलिस्थूलान्वैणवान् मूर्धसम्मितान् ॥ "

हारीतः-

विष्णुरूपं त्रिदण्डाख्यं सर्वदा धारयेद्यतिः ।
कुर्यात्त्रिदण्डग्रहणं कालक्षेपं न कारयेत् ॥

आह वृद्धदक्षः-

केशमात्रान् समग्रन्थीन् त्रिदण्डान्वैणवान् यतिः ।
धारयेत् सर्वथा पात्रं सशिक्योदकमण्डलुम् ॥

अत्रिदत्तात्रेयौ—

गृहवासविरक्तानां पुरा प्रोक्तं स्वयम्भुवा ।
काणादशाक्यपाषण्डैः त्रयीधर्मो विलोपितः ॥
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी । "

इत्यादिश्रुतिस्मृतिभिः कुटीचकादीनां चतुर्णां यतीनामविशेषेण यज्ञोपवीतधारणवत् त्रिदण्डधारणमपि सर्वदा कार्यमिति विज्ञायते । नच परमहंसव्यतिरिक्तानामेतदिति वाच्यम्, शाट्यायनकोपनिषदि परमहंसं प्रस्तुत्य त्रिदण्डविधानात् । स्मृतिषु सर्वेषां यतीनां वृत्तित एव भेदः, लिङ्गं तु सामान्यमित्युक्तत्वाच्च ।

यत्तु " बिभृयादेकदण्डीवे " त्यादि बोधायनादिवचनात् त्रिदण्डैकदण्डधारणयोः विकल्पः प्रतीयत इति; तदसत् ;

" नष्टे जलपवित्रे वा त्रिदण्डे वा प्रमादतः ।
एकं तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥
गृहीत्वा विचरेत्तावत् यावल्लभ्यं त्रिदण्डकम् ।
यत्नेनान्वेषयेन्नित्यं अप्रमत्तस्समाहितः ॥ "
" यावन्न स्युस्त्रयो दण्डा स्तावदेकेन पर्यटेत् । "

इति हारीतमेधातिथिवचनाभ्यां त्रिदण्डालाभरूपापद्विहितैकदण्डविशेषविषयत्वात् बोधायनादिसामान्यवचनस्य । तदेतद्भगवान्व्यासोपि स्पष्टमाह—

जीवानुस्यूतिमात्रात्कथञ्चिदन्तर्यामित्वोक्तावपि सत एव तत्स्यात् , न तु परमेश्वरस्य । श्रुतिसाम्यन्यायोगव्यवच्छेदपरत्वोपपादनस्थले दूषितमेवेति ।

अपरपक्षे ' अन्तःप्रविष्ट ' मित्याद्युदाहरणमनुपपन्नम् ; तथाहि— यत्रान्तरवस्थानं प्राधान्येन प्रतिपाद्यते, तदेवोदाहरणं युक्तम् , अन्त श्शब्दनिर्देशेन तादृशवाक्यस्यैव बुद्धौ विपरिवृत्त्या तत्परित्यागे हेत्व भावात् ; नहि " अन्तःप्रविष्ट " मित्यादिवाक्यं प्राधान्येनान्तर्वर्तित्व परम् ; यदीमं न्यायमुपेक्ष्यान्तश्शब्दश्रवणमात्रेण स्वर्णधर्मानुवाकवाक्य-मात्रस्योदाहरणत्वमिष्यते, तदाप्यन्तरादित्यवाक्यस्याप्यन्तस्तद्धर्मोपदेशायो स्सत्त्वे तस्याप्युदाहरणता कुतो न स्यात् ? नन्वक्षिविद्याविषये " अन्त रुपपत्ते " रिति वक्ष्यते, यद्यन्तराक्षिविद्यायां अक्ष्यन्तर्वर्ती भगवानिति निश्चीयते, तदा ऽक्षिविद्यापि तत्तुल्यार्थेति निश्चयान्न तदधिकरणारम्भ सम्भव इति चेन्न;— तदधिकरणपर्यालोचनायां तच्छङ्कानुदयात् ; तच्च तत्रैव स्फुटीभविष्यति । द्वितीयसूत्रमप्यनुपपन्नम् , परस्परानुपजीवि साध्यद्वयपरत्वेनाधिकरणभेदप्रसङ्गात् , चकारास्वारस्याच्च ।

अन्यपक्षोप्यनुपपन्नः, अस्मिन्नेवाधिकरणेऽन्यशब्दे विद्यमाने चकारेण सूत्रद्वयोक्तहेतुद्वयस्य तदन्वये स्वरसतः प्रतीयमाने चाधिक रणान्तरान्नेतर इत्यनुवृत्त्ययोगात् । आदित्यान्तरुपास्यत्वेनोक्तो मण्डला भिमानी न भवति, किन्तु परमेश्वर एव, परमेश्वरो मण्डलाभिमानि नोऽन्य इत्येवं सूत्रद्वयेपि प्रतिज्ञाद्वयाविवक्षायां चशब्दवैयर्थ्यम् । नन्वस्त्व नुक्तसमुच्चयार्थश्चकारः, आदित्यान्तरुपास्यत्वेनोक्तो नारायणादप्यन्य इति; तन्न, हेतुसमभिव्याहृतस्यास्य चकारस्य हेत्वन्तरसमुच्चयं विना समुच्चया न्तरायोगात् , तदर्थानुपपत्तेश्च । तथाहि सवितृमण्डलमध्यवर्ती हिरण्मय वपुर्नारायण एव, " अथ य एष " इति वाक्ये आदित्यमण्डलस्थं पुरुष मभिधाय, " तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्याक्षिद्वयानुवादेन

पुण्डरीकसादृश्यं विधीयते, एतच्च पूर्ववाक्यप्रतिपन्नाया देवताया द्व्यक्षत्वे लिङ्गं सत्त्वचक्षं व्यावर्तयति, उद्देश्यविशेषणानामपि प्रतीतिरस्त्येव, परन्तु तद्विरुद्धार्थस्य श्रासौ कथञ्चित्तदनुगुणानुवादत्वादुद्देश्यविशेषणमविवक्षित मित्युच्यते; एवञ्चात्र विरोधाभावात् द्विवचनस्य कथञ्चिद्वर्णनीयत्वाभावेन द्वित्वानुवादो द्व्यक्षस्यैव तत्रावस्थानं सूचयति; पुण्डरीकाक्षाभिधानयोगा-धीनतत्प्रत्यभिज्ञा, " हिरण्मयः पुरुषः " " आप्रणखात्सर्व एव सुवर्ण " इत्याभ्यां " सुवर्णज्योतिस्सरिरस्य मध्ये " इत्येतत्प्रत्यभिज्ञा, अपहतपाप्म त्वञ्च अत्र लिङ्गानि । अपहतपाप्मत्वंच सुबालोपनिषदादिषु भगवदसाधा-रण्येन प्रसिद्धम् । पूर्वत्रापि " अथ यदेतदादित्यस्य शुक्लं भास्सैवर्क् अथ यन्नीलं परः कृष्णस्तत्साम, अथैतदेवैतदादित्यस्य शुक्लं भास्सैव सा, अथ यन्नीलं परः कृष्णस्तदिदं स तत्साम " त्यादित्यान्तर्वर्ती भगवानेवेति स्पष्ट मवगम्यते । अत्र ' अथयन्नील ' मित्येतत् यदादित्ये नीलमिति शङ्करेण व्याख्यातम्। नीलं- नीलद्रव्यं। तत्किमित्याकांक्षायां तद्व्याचष्टे 'परः कृष्ण' इति, परमात्मा कृष्ण इत्यर्थः । " परः कृष्ण " मिति पाठे लिङ्गव्यत्यय श्छान्दसः । एवं श्रुत्यैव भगवत्त्वावगतिः । पूर्वत्र सर्वत्रेयमित्यादिना पृथि-व्यादिकं निर्दिश्य, " सैवर्क् तदम " इत्याद्युक्तम्, अतोऽत्रापि " यन्नीलं तत्साम तदम " इत्येतावत्येव वक्तव्ये " परः कृष्ण " इत्यतिरिच्यते । अत इदमिह विज्ञायते, पूर्वमेकेनैव पदेन पदान्तरनिरपेक्षेण द्रव्यविशेषण समर्पणान्न तत्र पदान्तरप्रयोगः, इह तु नीलपदेन द्रव्यविशेषप्रतीतेस्तत्प्र-तीत्यर्थं " परः कृष्ण " इत्युच्यते; इयंशब्दस्य सामान्यशब्दत्वेपि प्रयोग प्राचुर्येण द्रव्यविशेषप्रतीतेर्न पदान्तरप्रयोगः । अतो द्रव्यविशेषप्रतीत्यर्थ मेवेदं विवरणम् " परः कृष्ण " इति । नैल्योत्कर्षविवक्षाभ्रमवारणार्थमेव वत्सलतरा भगवती श्रुतिरुपस्थितत्वान्नीलपदेन निर्दिष्टव्येपि कृष्णपदेन नि-र्दिशति भगवदुपासनार्थम् । एवमपि यदि भ्राम्यति, भ्राम्यन्तु कामम् , न

श्रुतेरपराधोस्ति । यदि तु कृष्णशब्दः कृष्णद्रव्यपरः कार्ष्ण्यपरो वा, तत्र च लिंगव्यत्ययश्छान्दसः, तदेदं लिङ्गम् । अस्मिन् पक्षे परकृष्णपदयोर्न किंचित्प्रयोजनं दृश्यते । एवमक्षिविद्यायामप्यक्षिसन्निहितस्यैव निर्देशो दृश्यते । उपबृंहिता चेयं विद्या योगार्णवे "आदित्यमण्डले तत्र पश्येद्विष्णुं परात्परम् । सर्वाधारं वासुदेवमीशानं शिवमच्युतम् ॥ आत्मानं सर्वजगतां पुरुषं हेमरूपिणम् । हिरण्यश्मश्रुकेशं च हिरण्मयनखं हरिम् ॥ कप्यास्यासनवन्नेत्रं सृष्टिस्थित्यन्तकारणम् । पद्मासनस्थितं सौम्यं प्रबुद्धकमलेक्षणम् ॥ ईश्वरं सर्वभूतानां सर्वलोकाभयप्रदम् । विजानन्तं सदा सर्वधारणाद्धर्ममुत्तमम्" इति । अत्र "परात्पर" मिति "परः कृष्ण" इत्यत्र परशब्दो व्याख्यातः । 'आस्यासनव" दिति कप्यासशब्दस्यार्थद्वयमुक्तम् । द्वितीयो वाक्यकारोक्तः, प्रथमो ऽपूर्वः । "प्रबुद्धकमलेक्षण" मिति रविकरविकसितत्वरूपार्थान्तरमुक्तम् । कं जलं पिबतीति कपिस्सूर्यः, तेनास्यत इति कप्यासम्, आदिकर्मणि क्तविवक्षया जले अप्यास्त इत्ययमप्यर्थो लब्धः । "सर्वलोकाभयप्रद" मित्यनेन कृष्णशब्दस्य यौगिकार्थो विवृतः । तैत्तिरीयमहोपनिषदि आदित्यान्तर्वर्तित्वं भगवतः श्रूयते — "य एषोन्तरादित्ये हिरण्मयः पुरुषः" इति, अस्य च नारायणपरत्वं पूर्वस्मिन्नारायणानुवाके तस्य प्रकृतत्वादवगम्यते । किञ्चानन्दवल्ल्यां "सयश्चायं पुरुषे यश्चासावादित्ये स एक" इति पुरुषे आदित्ये च वर्तमानत्वेन प्रसिद्धवन्निर्दिष्टस्याभेदः श्रूयते, नारायणानुवाके तदनन्तरानुवाके च तदपेक्षिता प्रसिद्धिराधेया, तयोः परस्परसन्निधानात् । अत्र स्वप्रकरणे "यो वेद निहितं गुहाया" मिति पुरुषान्तर्वर्तितया प्रकृतत्वादयमिति निर्देशः । नारायणानुवाकरूपप्रकरणान्तरे तथा प्रकृतत्वात् स इति निर्देशः । अनेन नारायणानुवाकस्योपस्थित्या तदनन्तरानुवाकस्यापि बुद्धिस्थत्वेन "यश्चासावादित्ये" इत्यत्रासाविति निर्देशः ।

ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् । उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः ' " ईशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपति ब्रह्मणोधिपति " रिति तापनीयानुसारेण " तन्मध्ये दहराकाशं तन्मध्ये सूर्य मण्डलम् । तन्मध्ये परमानन्दवपुषं कृष्णपिङ्गळम् । नारायणं जग न्नाथं वासुदेवमनामयम् " इति योगार्णववचनानुरोधेन, " विष्णुः कृष्णः केशवो मञ्जुकेशः श्रीवत्साङ्कः श्रीपतिः पीतवासाः । विष्वक्सेनो विश्वरूपो मुरारिश्शौरिश्शार्ङ्गी पद्मनाभो मुकुन्दः " इति हलायुधवचनात् विश्वरूपशब्दस्य भगवति रूढत्वेन च भगवत्परत्वात्, तापनीये उमा शब्दो लक्ष्म्यात्मकसकलजगत्सृष्टिमूलभूतभगवद्बुद्धिशक्तिपरः । वाराहे " पूर्वं नारायणस्त्वेको नासीत् किंचिद्धरेः पर" मित्यादिना " एको ह वै नारायण आसी " दित्युपनिषदर्थमनुक्रम्य, " तस्य द्वितीयं मिषतश्चिन्ता बुद्ध्यात्मिका बभौ " इति प्रकृतायां लक्ष्म्यात्मिकायां बुद्धौ " उमेति संज्ञया सा तु तदादित्वे व्यवस्थिता । ओमित्येकाक्षरीभूत्वा ससृजे सा भुवन्तु सा " इत्युमासंज्ञकत्वाभिधानात् । पिङ्गळत्वञ्च लक्ष्मीभूषाम्बरायुधै रुपपन्नम् । विरूपाक्षत्वञ्च वाराहे तस्मिन्नेवाध्याये " तस्य चिन्त यतो नेत्रात्तेजस्समभवन्महत् । दक्षिणं वह्निसंकाशं वामं तुहिनसन्निभम्" इति शीतोष्णत्वेन वैरूप्याभिधानान्निर्व्यूढम् । " ऊर्ध्वरेत " मिति च रेतोभ्यो विकारेभ्य ऊर्ध्ववर्ति, विश्वविकारोत्तीर्णम्, छान्दसस्सकारलोपः, ऐतरेयके " अथातो रेतसस्सृष्टिः प्रजापतेरेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्न " मिति विकारे प्रयोगात् । नच " ऋतं सत्य " मित्यत्र विरूपाक्षशब्दरूढ्या रुद्रपरत्वाशङ्का, तस्य प्रथमान्तस्य ब्रह्मविशेषणत्वेन नपुंसकलिङ्गत्वात्; पुलिङ्गस्यैव तत्र रूढत्वात् । " यद्वा ऋतं परं ब्रह्म प्रति विष्णुं सदाशिवः । ऊर्ध्वरेता ध्यायतीह शङ्करो नीललोहितः " इत्यथर्वणि श्रूयते, तदनुसारात्ताप नीयश्रुतौ " कृष्णपिङ्गळ " मित्यन्तः पूर्वभागो द्वितीयान्तो भगवत्परः;

उत्तरभागस्तु प्रथमान्तो रुद्रपरः; ध्यायतिपदञ्चाध्याह्रियते ; ततश्च ऋतं सत्यं परं ब्रह्म कृष्णपिङ्गळं पुरुषं विरूपाक्ष ऊर्ध्वरेतास्सन् ध्यायतीति वाक्यार्थः । पूर्वोत्तरभागयोरेकविषयत्वे कृष्णपिङ्गळशब्देन नीललोहितशब्दस्य पौनरुक्त्यप्रसङ्गात् । "ऋतं सत्य" मिति तैत्तिरीयश्रुतेरप्येवमेवार्थः । ननु "सर्वो वै रुद्र" इत्यारभ्य, "नमो हिरण्यबाहवे हिरण्यपतयेम्बिकापतय उमापतये नमो नम" इति श्रवणात्तत्र बाहुग्रहणस्योपलक्षणत्वेनादित्यान्तर्वर्तिहिरण्मयपुरुषप्रत्यभिज्ञानाच्च रुद्रएवादित्यान्तर्वर्तीति चेन्न;—"आदित्यो वा एषः" "आदित्यो वै तेज" इति चाभ्यामनुवाकाभ्यां अन्तरादित्यविद्यां सफलामभिधाय, तदन्ते 'इत्युपनिषत्' इत्युपसंहारेण तद्विद्याप्रकरणविच्छेदात् । "हिरण्यबाहव" इति च बहुव्रीहिणा हिरण्यालंकृतबाहव इत्यर्थः । अन्यथा लक्षणाप्रसङ्गात् । तस्मान्न प्रत्यभिज्ञा । अतस्सिद्धं भगवानेव तैत्तरीयमहोपनिषद्यादित्यान्तवर्ती श्रूयत इति । तथैव चेयमुपबृंहिता श्रीविष्णुपुराणे – "सर्वशक्तिः परा विष्णोः ऋग्यजुस्सामसंज्ञिता । सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति यत् ॥ सैव विष्णुस्थितः स्थित्यां जगतः पालनोद्यतः । ऋग्यजुस्सामभूतोन्तः स्सवितुर्द्विज तिष्ठति ॥ मासि मासि रविर्योयस्तत्र तत्र हि सा परा। त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै ॥ अङ्ग एषा त्रयी विष्णोः ऋग्यजुस्सामसंज्ञिता । विष्णुशक्तिरवस्थानं सदादित्ये करोति सा ॥ नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृक् । विष्णुर्विष्णोः पृथक्तस्य गुणस्सप्तविधोप्ययम् । एवं सा वैष्णवी शक्तिर्नैवापैति ततो द्विज । मासानुमासं भास्वन्तमध्यास्ते तत्र संस्थितम्" इति । अत्र "सैषा त्रयी तपती" ति- "सैषा त्रय्येव विद्या तपती" ति वाक्यस्यैव किंचिद्विकृतस्य निबन्धनाच्छक्ते ऋग्यजुस्साममयत्ववर्णनाच्च तदुपबृंहणत्वं स्फुटम् । शक्तिशब्दो विग्रहविशेषविशिष्टपरः, "ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः"

इत्यादिषु तथा दर्शनात् । " विष्णोः पृथक्तस्य गुण " इत्युक्त्या मण्डलाधिष्ठातृविग्रहविशिष्टाद्विष्णोः पृथक्त्वस्य विवक्षितत्वादादित्यान्तर्वर्ती पुरुषो हिरण्मयो विष्णुरिति दर्शितं भवति । स्वरूपात् पृथक्त्वस्यात्रैव पुराणे बहुशो निषेधात् । " मासि मासी " ति वीप्सया " नापैती " त्युक्त्याच मासविशेषे विष्णोर्मण्डलाधिकारित्वात्तस्यादित्यान्तर्वर्तितोक्तिः क्वचिदिति मूर्खप्रलापोपास्तः, तैत्तिरीय एव " प्रजापतिरिन्द्रमसृजतानुजावरं देवानां तं प्राहिणोत परे हि एतेषां देवानामधिपतिरेधी ति "तं देवा अब्रुवन् कस्त्वमसि वयं त्वच्छ्रेयांसस्स्म इति देवा अवोच " न्निति, अथ वा "इदं तर्हि प्रजापतौ हर आसीत् यदस्मिन्नादित्ये तदेनमब्रवीत् एतं मे प्रयच्छ अथाहमेतेषां देवानामधिपतिर्भविष्यामीति " इत्यारभ्य, " तदस्मै रुक्मं कृत्वा प्रत्यमुञ्चत् ततो इन्द्रो देवानामधिपतिरभवत् " इति सूर्यमण्डलान्तर्वर्तितेजसो रुक्ममयग्रैवेयीकृतस्य इन्द्राय प्रदानमुक्तम् ; तस्य रुक्माभरणीकरणं च यन्त्रप्रतिकृत्यादिरूपेण रुक्माभरणे विन्यासः; तच्च तेजो विष्णुरूपमेवेति उदाहृतानुवाकार्थप्रत्यभिज्ञापकपूर्वतापनीयखण्डादवगम्यते । सोयं खण्डः—
" इन्द्रः किल देवानामानुजावर आसीत्तं प्रजापतिरब्रवीत् गच्छ देवानामधिपतिर्भवेति सोऽगच्छत् तं देवा ऊचुः आनुजावरोसि त्वमस्माकं कुतस्तवाधिपत्यमिति स प्रजापतिमभ्येत्योवाच मां देवा ऊचुः आनुजावरोसि कुतस्तवाधिपत्यमिति तं प्रजापतिस्सौवर्णैः कलशैरमृतपूर्णैरानुष्टुभामन्त्रितैरभ्यषिंचत् तं सुदर्शनेन दक्षिणतोऽरक्षत्पाञ्चजन्येन वामतः द्वयेनैव सुरक्षितोऽभवत् रौक्मे फलके सूर्यवर्चसं मन्त्रमानुष्टुभं विन्यस्य तदस्य कण्ठे प्रत्यमुञ्चत् तदस्य दुर्निरीक्षोभव" दित्यादिः । हरशब्दस्य तेजोवाचित्वंच "ज्योतिर्हर उच्यते लोकाहरांस्युच्यन्त" इति नैरुक्तवाक्यादिभ्योवगन्तव्यम्। किंच "स्वर्णघर्मानुवाकेन महापुरुषविद्यया " इति भागवते एकादशस्कन्धे भगवदर्चायां विनियोगात् "सलुद्रेन्तः कवयो विचक्षत " इति तत्रस्थसमुद्रशायित्वलिंगाच्च

भगवत्परतया सिद्धस्वर्णधर्मानुवाकोप्यादित्यान्तर्वर्तित्वे भगवतः प्रमाणम् । तत्र " अन्तरादित्ये मनसा चरन्तं'मरीचीनां पदमिच्छन्ति वेधसः " " सप्त युञ्जन्ति अजस्रं ज्योतिर्नभसा सर्वदेती " त्यादिषु परमात्मलिंगै स्सूर्यान्तर्वर्तिपरमपुरुषाभिधानात् मरीचीनां पदं सूर्यमण्डलम् । तथा आरुण केतुके प्रपाठके " केदमग्रं निविशत " इत्यनुवाके अग्रादीनां निवास प्रश्नोत्तरवाक्ये " विद्युत् सूर्ये समाहिता अनवर्णे इमे भूमी इयं चासौ च रोदसी " इति सूर्यमण्डलस्य द्यावापृथिवीधारकत्वमुक्त्वा, किं स्विदत्रान्तराभूतं येनेमे विधृते उभे " इति अस्मिन् सूर्यमण्डलान्तः किं भूतं वर्तते यन्मुखेनास्य द्यावापृथिवीधारकत्वमुपपद्येतेति " गुह्यम्महो बिभ्रदिती " ति सावित्रवाक्योक्तगुह्यतेजोविषयकप्रश्नमवतार्य, " विष्णुना विधृते भूमी " इत्युत्तरवाक्येन सावित्रान्तर्वर्ति गुह्यं महो भगवानेवेति व्याख्यातम् । तथा मैत्रायणीयोपनिषदि षष्ठे प्रपाठके"विश्वसृग्वैनामैषा तनूर्भवतो विष्णोर्यदिदमन्नं प्राणो वा अन्नस्य रसः प्राणस्य मनो विज्ञानं मनस आनन्दं विज्ञानस्येत्येवं विद न्नवान् प्राणवान्मनस्वान् विज्ञानवानानन्दवांश्च भवती"त्यारभ्य,"अग्निहोत्रं जुह्वानो मोहजालं भिनत्ति अन्तस्सम्मोहं छित्वा क्रोधं स्तुन्वानः काम मभिध्यायमानश्चतुर्जालं ब्रह्मकोशं भिनत्ति ततः परममाकाशम् " । अत्र हि सौरसौम्याग्नेयसात्विकानि मण्डलानि ततश्शुद्धसत्त्वान्तरवस्थमचलममृतं ध्रुवं विष्णुसंज्ञितं सर्वाधारं धाम सत्यकामसर्वज्ञत्वसंयुक्तं स्वतन्त्रं चैतन्यं स्वे महिम्नि प्रतिष्ठमानं पश्यति, अत्रोदाहरन्ति- " रविमध्ये स्थितः सोमस्तस्य मध्ये हुताशनः । तेजोमध्ये स्थितं सत्त्वं सत्त्वमध्ये स्थितोऽच्युतः ॥ शरीरप्रादेशमात्रमङ्गुष्ठमात्रमणोरप्यणुतरं ध्यातः परमतां गच्छति अत्र हि सर्वे कामास्समाहिता इति, अत्रोदाहरन्ति अङ्गुष्ठ प्रदेशशरीरमात्रं प्रदीपप्रतापवद्द्विधा त्रिधा हि ब्रह्माभिष्टूयमानम्महो देवो भुवनान्याविवेश ओंनमो ब्रह्मणे नमः " इत्युक्तम् । तथा— हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं । स त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ॥

मिति विशेषः । नचैवमपि पाठक्रमेण प्रधानविधेरेकसम्बन्धावगमो त्तरमन्यसम्बन्धायोगात् वाजिनन्यायेन भेदोपपत्तिः, प्रधानविधेः पर्यायेणाङ्गताग्राहकत्वस्यैकादशे निषेत्स्यमानत्वेन पाठस्यानियामकत्वात् । अत एव तादृशस्थलेऽनुष्ठानवेलायामप्यनियामकः पाठो नान्तरीयकत्वात् पारायणादावेवोपयुज्यत इति द्रष्टव्यम् । अतः सर्वेषां युगपत् सम्बन्धाच्च वाजिनन्यायेनापि भेदकत्वमिति । प्रयोजनं पूर्वपक्षे दध्यादिहोमानां समुच्चयः, सिद्धान्ते दध्यादीनां विकल्प इति । अथवेदं सूत्रं वाजिनन्यायप्रत्युदाहरणमेव, नत्वधिकरणान्तरम् । सूत्रं स्पष्टम् ।

इति शेषाधिकरणम् । ॥१०॥

———(*)———

## अथ इन्द्रियकामाधिकरणम् ।

**फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् ॥ २-२-२१॥**

अग्निहोत्रं प्रकृत्य " दध्नेन्द्रियकामस्य जुहुया " दिति श्रुतम् । तत्र किं तस्यैव कर्मणो दधिविशिष्टस्य फले विधानम्, उत कर्मान्तरस्य दधिविशिष्टस्य, उत दध्न एव फले विधानं होमस्त्वाश्रयत्वेन प्रकरणप्राप्तोऽनूद्यत इति विचारः । आद्यपक्षे भावनाभेदाभावादितरयोश्च गुणप्रमाणकस्य तस्य सत्त्वात् पादाध्यायसङ्गती स्पष्टे । अनन्तरा तु पूर्वसूत्रस्य प्रत्युदाहरणत्वपक्षे पूर्वाधिकरणोक्तवाक्यभेदापादकगुणस्यापवादात् द्रष्टव्या । नच तस्य पौर्णमास्यधिकरणे निरूपितत्वान्न पूर्वाधिकरणविषयत्वमिति वाच्यम्, गुणमात्रस्य पूर्वाधिकरणविषयत्वेपि प्रसङ्गादन्यत्र निरूपणे बाधकाभावात्; वाजिनवाक्येपि पूर्वभागानुवादेनोभयविधौ तस्य वक्तुं शक्यत्वाच्च । अधिकरणान्तरत्वपक्षेपि च " गुणस्तत्र प्रतीयेते " ति पूर्वसूत्रोक्ताया गुणस्य पूर्वकर्माङ्गताया अपवादाद्द्रष्टव्या ।

तत्रेन्द्रियकर्मिकायां भावनायां भावार्थाधिकरणन्यायेन होमस्यैव करणत्वोपपत्तौ न तावत् गुणस्य करणत्वोपपत्तिः; नापि कर्मान्तरम्, भेदकप्रमाणाभावात्; तथाहि- भेदकप्रमाणानां मध्ये गुणस्त्वया भेदकत्वेन शङ्क्येत, प्रकरणान्तरं वा? नाद्यः, उत्पत्तिशिष्टगुणान्तराभावेन वाजिनन्यायेन तस्याभेदकत्वात् । ननु तथाप्युत्पत्तिवाक्ये कर्मणः प्राप्तत्वात् तदनुवादेन फलसम्बन्धस्य गुणसम्बन्धस्य च विधौ वाक्यभेदापत्तेः तदापादकस्य गुणस्य भेदकत्वं भविष्यत्येव; नच गुणस्य "दध्नाजुहोती" त्यनेनैव प्राप्तत्वात् तद्वाचकपदस्यानुवादकत्वेन नामधेयत्वेन चोपपत्तेः केवलफलसम्बन्धमात्रकरणात् न वाक्यभेद इति वाच्यम्, अग्निहोत्रे द्रव्यान्तराणामपि विहितत्वेनेन्द्रियकामप्रयोगे दध्नो नियमेन प्राप्त्यभावात् पाक्षिकानुवादकत्वनामधेयत्वयोरसम्भवेन विधेयत्वापत्तेः वाक्यभेदानिवारणात्, गोदोहनादीनां कदाचिदपि प्राप्त्यभावेन एतत्परिहारानुपपत्तेश्चेति चेन्न;— उत्पन्नस्यापि कर्मणः फलोद्देशेन विधेयत्वात्, तत्र गुणविशिष्टस्य विधानोपपत्तेः; अन्यथा "राजा राजसूयेने" त्यत्र प्राप्तस्यापि राजसूयस्य-राजकर्तृविशिष्टस्य फले विधानानुपपत्तेः । नच तत्र राजपदस्य स्वाराज्यकामपदसमभिव्याहारादधिकारिविशेषणत्वमात्राङ्गीकारान्नैतादृशवाक्यार्थाङ्गीकरणमिति वाच्यम्, तथात्वे उद्देश्यविशेषणत्वेन स्वाराज्यकामपदोपात्तपुंस्त्ववद्राजत्वस्याप्यविवक्षापत्तेः । अत एव शुचित्वाहिताग्नित्वादीन्यपि तत्तत्प्रमाणप्रमितान्येव मिलित्वा स्वातन्त्र्येणाधिकारविधिं कल्पयन्ति, न तु श्रूयमाणे विधौ विशेषणतां प्रतिपद्यन्ते, अतश्च राजत्वस्य कर्तृत्वेनैव यागविशेषणत्वस्य वाच्यत्वात् कर्तृविशेषणस्यापि चार्थादधिकारिविशेषणत्वेन कल्पनोपपत्तेः फलोद्देशेन विशिष्टयागविधानादेव वाक्यभेदपरिहारो वाच्यः । नच राजत्वस्योपादेयकर्तृविशेषणत्वे तत्पदोपात्तस्य पुंस्त्वस्यापि विवक्षापत्तिः, प्रमाणान्तरेण स्त्रिया अप्यधिकारावगमेन "वसन्ते

ब्राह्मणो ऽग्नीनादधीते" तिवत् कस्यचिल्लिङ्गस्य साधुत्वार्थं वक्तव्यस्या वर्जनीयतया पुंस्त्वानुवादेन गौरवापादकविधेयताङ्गीकारानुपपत्तेः । अतो यथैव राजत्वविशिष्टस्य प्राप्तस्यापि राजसूयस्य फलोद्देशेन विधानान्न वाक्यभेदः, तथात्रापीति द्रष्टव्यम् । अवश्यं चायं प्रकारः त्रिवृदग्निष्टु दग्निष्टोम" इति उत्पत्तिवाक्यप्राप्ताग्निष्टुत एव "वायव्यास्त्वेकविंशमग्नि ष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेते" ति फलवाक्ये अग्निष्टोम कर्तृत्रृत्तिवाव्वादिगुणविशिष्टस्य फलोद्देशेन विधानादङ्गीकर्तव्यः । दर्श पूर्णमासवाक्ये च साहित्यविशिष्टानां प्राप्तानामप्याग्नेयादीनां फले विधा- नात् । तस्मान्न तावत् गुणात् भेदः । अत एव फलरूपानुपादेयगुण- योगादनुपादेयस्य गुणविशिष्टस्य कर्मणो मासाग्निहोत्रवदुत्सर्गतः प्राप्तस्य विधेयत्वस्यापवादकाभावात् प्रत्यभिज्ञायाश्च प्रणयनादिमात्रविषयिण्या भिन्नविषयत्वेन गोदोहनविशिष्टप्रणयनवृत्तिविधेयतापादकत्वायोगात् दध्या दावपि दधिमात्रविशिष्टहोमवृत्तिविधेयताया दशद्रव्यविशिष्टहोमविषयक प्रत्यभिज्ञयापवादायोगस्य तुल्यत्वादनुपादेयगुणसहकृतानुपस्थितिरूपप्रकर- णान्तरमेव मूलोक्तं भेदकं प्रत्युक्तम् । राजसूयादिस्थले विशेष्यमात्र प्रत्यभिज्ञायाः तन्मात्रवृत्त्युत्पत्तिविधिविषयतारूपविधेयताप्रतिबन्धकत्वस्येव प्रकृतेपि सम्भवात् । तस्मात् भेदकप्रमाणासम्भवेन कर्मान्तरत्वायोगात् तदेव कर्म गुणविशिष्टफलोद्देशेन विधीयत इत्येकः पक्षः । तत्र पूर्वसूत्र मपि योजयितुं शक्यत इत्येवं योज्यम् – अगुणेपि कर्मप्रापके शब्दे सति तत्र फलसम्बन्धकरणे गुणोऽपि वैशिष्ट्येन प्रतीयेतेति । द्वितीयस्तु– गुण एव वाक्यभेदापादकः भेदकः । तथाहि– विधिस्तावत् चतुर्विधः- उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिरधिकारविधिरित्यविवादम् । अङ्गान्यपिच कानिचिद्द्रव्यदेवतादीन्युत्पत्तौ, कानिचित् साहित्यादीनि विनियोगे, कानिचिच्च कर्तृदेशकालादीनि प्रयोगेऽन्वीयन्त इत्यप्येकादशे

वक्ष्यते । अतएव द्रव्यादीनां प्रधानमात्रे कर्त्रादीनां च साङ्गे प्रधाने निवेशो लभ्यते । अतएव यत्रैकस्मिन्नेव वाक्ये विधिचतुष्टयं विधित्रयं विधिद्वयं वा तत्र पूर्वविशिष्टापरविध्यङ्गीकारेपि यथायोगं अङ्गानामन्वयो द्रष्टव्यः । तदिह दध्नः उत्पत्तावन्वयायोग्यस्य विनियोगान्वयादिन्द्रियकाम वाक्ये च तव मते विनियोगमात्रकरणेनोत्पत्त्यविधानाद्विशिष्ट्यासम्भवेन प्राप्तो त्पत्त्यनुवादेन दधिविधिः, इन्द्रियोद्देशेन च होमविनियोगविधिरिति वाक्य भेदो दुरपह्नवः । दर्शादिवाक्ये तु साहित्यस्य विनियोगविधावन्वययो. ग्यत्वेन फलोद्देशेन विधेयविनियोगविशेषणत्वोपपत्तेः विशिष्टविधिसम्भवान्न भेदः । एवं राजसूयवायव्यादिवाक्येष्वपि विधेयस्य विशिष्टविनियोग विशिष्टप्रयोगस्य कर्तृकालादिरूपराजाद्यन्वययोग्यत्वात् विशिष्टविधिसम्भ- वेन वाक्यभेदः परिहर्तव्यः । यद्यपि चानुमत्यादीनां प्रत्येकं दैशिक कालिकप्रयोगा देशकालविधिषु प्राप्ताः, तथापि अप्राप्तकर्तृसम्बन्धेन प्रयो- गान्तरविधिः कालसम्बन्धेन प्राप्तेपि दर्शपूर्णमासप्रयोगे समवाक्ये देश सम्बन्धेन प्रयोगान्तरविधिवन्नानुपपन्नः । अयञ्चैकः प्रयोगो मुख्यकर्तृ विषयः, प्रत्येकं दक्षिणाम्नानात्तु ऋत्विक्कर्तृविषया भिन्ना एव प्रयोगा इति द्रष्टव्यम् । वायव्यवाक्येपि च क्त्वाप्रत्ययोपात्तस्य पूर्वकालत्वादेः प्रयोगविशेषणत्वात् न वाक्यभेद इत्युत्तराधिकरणे निरूपयिष्यामः । तस्माद्दाधिवाक्ये वाक्यभेदसम्पादकस्य गुणस्यैव भेदकस्य सत्त्वात् कर्मान्तरत्वोपपत्तिः । नच रूपाभावाद्विधानायोग्यत्वम्, सत्यपि दर्वी- होमत्वे अकांक्षावशेन दधिद्रव्यकहोमत्वसादृश्येन चाग्निहोत्रधर्मातिदेशो- पपत्तेः, न दर्वीहोमानामपूर्वत्वमिति राजाज्ञा, कृत्स्नविधानत्वात् प्रकृति विशेषनिर्णयाभावाच्च तदिति हि वक्ष्यते । नचात्र तद्द्वयमप्यस्ति, अतो रूपसत्त्वात् कर्मान्तरत्वमेव युक्तम् । सूत्रं तु फले होमविनियोगस्य श्रवणात् तत्र च दध्याद्यन्वयायोगेन कर्मान्तरमेव विधेयं स्यात्, नच

गुणफलसम्बन्धशङ्का फलस्य, भावार्थाधिकरणन्यायेन कर्मयोगित्वावगमा दिति व्याख्येयम् ।

अतुल्यत्वाद्वाक्ययोर्गुणे तस्य प्रतीयेत ॥२—२—२५॥

तत्र भावार्थाधिकरणन्यायो यत्र धात्वर्थादनुत्तारणं विधेः, तदपि च यत्र धात्वर्थमात्रं धात्वर्थनामार्थावुभावप्राप्तौ यत्र वोभौ सम्भवत्प्राप्तिकौ प्राप्तौ वा, यथा– "अग्निहोत्रं जुहोति" "सोमेन यजेत" "उरुप्रथस्वेति पुरोडाशं प्रथयति" "ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्नि" त्यादौ । अत्र हि ऐन्द्रवायवाग्रतायाः पाठाद्ग्रहणानां च तत्तद्विधिभ्यः प्राप्तत्वेपि प्रजाफलसम्बन्धो ग्रहणानामेव भावार्थाधिकरणन्यायेनेति दशमे वक्ष्यते । यत्र तु नामार्थ एवाप्राप्तः तत्र तन्मात्रसंक्रान्तत्वाद्विधिशक्तेर्धात्वर्थविधाने गौरवापत्तेरन्यतः प्राप्तधात्वर्थानुवादमपेक्ष्य गुणमात्रं विधिः विधत्ते । तत्र धात्वर्थांशे विधेयताया अभावेन प्रयोजनाकांक्षत्वात् फलसम्बन्धस्य पक्षेप्यप्राप्तत्वेन प्रत्यासत्तेरनियामकत्वात् न भावार्थाधिकरणन्यायप्रवृत्तिरिति नामार्थस्यैव विधेयत्वेन प्रयोजनसाकांक्षत्वात् फलसम्बन्धः स्वीक्रियते । एवं नामार्थेष्वपि यत्र कश्चिदेवार्थोऽप्राप्तः अन्ये तु प्राप्ताः, तत्रापि तस्यैव फलसम्बन्ध इति द्रष्टव्यम् । अत एव "साकं प्रस्थायीयेन यजेत पशुकाम" इत्यादौ सहत्वमात्रं फलस्य विधीयते, नतु यागः प्रस्थानं वेति वक्ष्यते । तदिह धात्वर्थस्यान्यतः प्राप्तत्वात् गोदोहनादेश्च गुणस्याप्राप्तेः दध्यादेश्च नियमेन अप्राप्तेः तस्यैव फलसम्बन्धः ।

यद्यपि च दधिहोमयोरुभयोरपि स्वरूपेण प्राप्तिः इन्द्रियसम्बन्धेन चाप्राप्तिः तुल्या, तथापि इन्द्रियकामपदाभावे दधिनियमं कर्तुमारभमाणस्य विधेः दधिमात्रविषयत्वप्रतीतेः तस्यैव फलसम्बन्धात् । नच, दधिनियम

स्यापि "दध्ना जुहोती" त्यनेनैव प्राप्तत्वादैन्द्रवायवादिग्रहणवद्धात्वर्थस्यैव फलसम्बन्धो युक्त इति वाच्यम् , तथात्वे दधिपदस्य पाक्षिकानुवाद वैय्यर्थ्यापत्तेः; दधिविशिष्टधात्वर्थस्य फलसम्बन्धे गौरवापत्तेः दधिमात्रस्य फलसम्बन्धाङ्गीकारात् । ऐन्द्रवायवाग्रत्वस्य तु शुक्राग्रत्वेन पाक्षिकानुवादा द्यापत्तावपि न फलसम्बन्धः, तथात्वे काम्यत्वेन बृहत्सामत्वपक्षेपि तदा पत्त्या "यदि रथन्तरसामे " त्येतद्वाक्यावगताया रथन्तरसामकत्वाभावैन्द्र वायवाग्रत्वाभावव्याप्तेः भङ्गापत्तेः । अतः तात्पर्यग्राहकानुरोधेन तत्र पाक्षि कानुवादत्वमङ्गीकृत्यापि धात्वर्थस्यैव फलसम्बन्धः । नतु प्रकृते । अतो दधिपदवाच्या दधित्वादिजातिरेव तल्लक्षितव्यक्तिर्वा फलार्थं विधीयते । तस्याश्चाश्रयत्वेन प्रकरणप्राप्त एव होमो जुहोतिनानूद्यते प्रत्ययसाधुत्वाय। तथाहि—दध्यादेस्तावत् सिद्धरूपत्वेन न यागादिवत् क्रियान्तरानपेक्षस्य फलजनकत्वम् , तथात्वे विधिं विनापि फलकामनायां सत्यां कारणस्य सत्त्वेन फलोत्पत्त्युपपत्तौ कारणविधिवैय्यर्थ्यापत्तिः । नहि कार्यकारणभावो विधिना जन्यते, अपितु बोध्यते । नच तद्बोधस्य यागादाविव किञ्चित्फल मस्ति, तमन्तरेणापि कारणस्य सत्त्वेन फलोपपत्तेः । अत एवेतिकर्तव्यता विधय एव परमुपयुज्यन्तां नतु दधिरूपकरणविधिरपि । अतो विधिसार्थ क्याय दृष्टविधया कृतिसाध्यधात्वर्थविशेषरूपाश्रयसम्बन्धित्वमवश्य मपेक्षणीयम् ।

तत्र च यद्यपि योग्यताबलेन स्वोत्पादनस्वसाध्यभोजनहोमा- द्यनेकधात्वर्थविशेषसम्बन्धो नियमेन प्रसज्यते, तथापि प्रकरणेनाधिकारा ख्येन विधिकल्पनद्वारा होमस्यैवोपनयान्नेतरधात्वर्थानामाश्रयत्वप्रसक्तिः । अत एव कल्पितेनापि विधिना न दधिहोमयोरङ्गाङ्गिभावो बोध्यते, गौरवात्; क्लृप्तप्रयोजनत्वाच्च; अपि तु लोकसिद्धकार्यकारणभावनियम मात्रं– दध्ना होमः कर्तव्य इति । नच दधिजन्यहोमकर्तव्यताया अपि " दध्ना जुहोती " त्यनेनैवावगतिरिद्धेः दधिविशिष्टहोमानुष्ठानेनैव

फलोपपत्तौ पुनरर्थान्द्रियकामवाक्यवैयर्थ्यापत्तिः, इन्द्रियकामनाया अधिकारिविशेषणत्वज्ञापनफलकत्वेन सार्थक्यात् । एतद्विध्यभावे हि दधिविशिष्टहोमानुज्ञानस्य नेन्द्रियोद्देश्यकता सिद्ध्यतीति तत्सिद्ध्यर्थमिन्द्रियकामविधिरर्थवानेव । प्रकरणकल्पितविधिबलादेव वाश्रयलाभसिद्धेः "न दध्ना जुहोती" त्यादेराश्रयकल्पकत्वमाशङ्कनीयम् । अतोऽन्यलभ्यत्वात् तेन क्रत्वर्थतैव बोध्यत इति ध्येयम् । अन्यलभ्यत्वादेव चेन्द्रियकामवाक्यस्थजुहोतिनाप्याश्रयतासम्बन्धेन होमविशिष्टदधिविधानमङ्गीकृत्याश्रयविधिरित्यपि निरस्तम् । यथा च प्रकारान्तरेणापि न वाक्येनाश्रयविधिः तथाग्निमाधिकरणे वक्ष्यते । अङ्गतासम्बन्धेन होमविशिष्टदधिविधिस्तु होमस्य प्रयोजनानाकाङ्क्षत्वात् निराकर्तव्यः । अतोऽत्र दधिमात्रमेव फलोद्देशेन विधीयते । होमस्त्वाश्रयतासम्बन्धेन प्रकरणप्राप्तो जुहोतिना साधुत्वार्थमनूद्यते । अत एव भावनाया दधिकरणिकाया अवच्छेदकीभूतधात्वर्थविशेषापेक्षायां समानपदश्रुत्युपात्तो होमोऽवच्छेदकतयान्वितोऽपि, न तदंशेऽपि विधिव्यापारकल्पना होमावच्छेदस्य महाप्रकरणात् प्रणयनाद्यवच्छेदस्य चावान्तरप्रकरणाल्लाभोपपत्तेः । अत एव करणविधिवैयर्थ्यस्याश्रयत्वनियामकत्ववत् भावनाया अवच्छेदकापेक्षापि तन्नियामिकेति द्रष्टव्यम् । किञ्च यत्र ससम्बन्धिक एव पदार्थोऽप्राप्तत्वेन फलोद्देशेन विधीयते तत्र तस्य सत्यपि यागादिवत् साक्षात् कृतिव्याप्यत्वे ससम्बन्धिकत्वादेव प्रतिसम्बन्धिरूपाश्रयलाभो न विरुध्यते, यथा—"पशुकाम उक्थ्यं गृह्णीया" दित्यादौ, उक्थ्यादिपदाभिधेयायास्सङ्ख्यायास्समापयतिधातुवाच्यत्वेन यागादिवत् साक्षात्कृतिसाध्यत्वेपि ससम्बन्धिकत्वादेव प्रतिसम्बन्धिभूतज्योतिष्टोमरूपाश्रयलाभः । यदा तु सौभराधिकरणन्यायसुधाकृदुक्तरीत्या उक्थ्यादिपदवाच्यग्रहयागाभ्यासा एव फले विधीयन्ते तदापि अभ्यासस्य प्रतिसम्बन्धियागापेक्षयैव ज्योतिष्टोमस्याश्रयत्वम् । यथाचायं पक्षो दुष्टः तथा संस्थाधिकरणे वक्ष्यामः ।

सर्वथा कृतिसाध्यधात्वर्थविशेषसम्बन्धित्वं दृष्टविधया फलार्थं विधीयमानस्य गुणस्य स्वनिष्ठकरणतासम्पादकत्वेनापेक्षितम् । अत एव न विधीयमानगुणजन्यत्वमेवाश्रयत्वम्, तदभावेपि "मन्थ्यग्रहानभिचरन्ती" त्यादौ ग्रहणानां मन्थिग्रहाग्रत्वरूपगुणाश्रयत्वदर्शनात् । अपि तु अदृष्टाद्वारकसम्बन्धेन गुणविशेषावच्छिन्नत्वम् । अदृष्टाद्वारकेति पदकृत्यन्तु वारवन्तीयादेरग्निष्टोमस्तोमजन्यादृष्टद्वारा यागेन सम्बन्धात् तस्याश्रयत्वव्यावृत्तिरित्युत्तराधिकरणे वक्ष्यते । तदेवं दध्यादौ यागादिवत् फलनिरूपितैव करणतेति पक्षमाश्रित्य करणविधिवैयर्थ्यादिना आश्रयाकांक्षोपपादिता । यदा तु दध्नेति तृतीयोपात्तं करणत्वं नेन्द्रियनिरूपितम्, अपि तु करणतासंसर्गेणैवेन्द्रियेऽन्वेति, अतश्च करणत्वविशिष्टस्य दध्नो दधिविशिष्टस्य वा करणत्वस्य करणतासंसर्गेणेन्द्रिये समन्वयो न तु यागादिवत्तृतीयोपात्तस्य करणत्वस्य निरूपकतासंसर्गेणेति पक्ष आश्रीयते, तदा तृतीयोपात्तस्य करणत्वस्य निरूपकापेक्षायां प्रतिसम्बन्धिविधयैव प्राकरणिकाश्रयलाभो न विरुध्यते । परन्तु निरूपकतासंसर्गापेक्षया करणतासंसर्गस्य गुरुभूतत्वाद्यागादिवैलक्षण्ये प्रमाणाभावाच्चायं पक्षो नातीवाद्रियते । सर्वथा प्रकरणादाश्रयलाभोपपत्तेरनेन गुणमात्रं विधीयते । भावनापि च सैव, धात्वर्थवत्तस्या अपि प्रत्यभिज्ञायमानत्वात् । न च प्राप्तभावनानुवादेन गुणसम्बन्धः फलसम्बन्धश्च विधीयेतेति वाक्यभेदापादकगुणादेव भेदः, भावनायाः फलसम्बन्धस्य रागप्राप्तत्वेनाविधेयत्वादिति भवदेवः ।

वस्तुतस्तु इन्द्रियाख्यफलस्य जन्यत्वेन व्यापारमात्रजन्यत्वावगमेपि लोकाद्विजातीययत्नजन्यत्वानवगमाद्विशेषतश्चाग्निहोत्रहोमानुकूलयत्ने स्वर्गादिजनकत्वेनावगते इन्द्रियजनकत्वस्य प्रमाणान्तरेणानवगतत्वाद्वाक्येनैव विधेयत्वापातात् दधिरूपद्रव्यस्य चोत्पत्तावन्वयेन राजसूयन्यायाविषयत्वाद्वाक्य-

कस्येव भूतलादिना दूरेणैव तन्नैल्याभिव्यक्तेः; यद्वा आरोपितनीलविशिष्टस्यैव वा प्रतिबिम्बनं, आरोपितरूपविशिष्टवेषेण चाक्षुषत्वं कल्प्यताम्, अन्वयव्यतिरेकाभ्यां रूपहीनस्यैव वा ऽ चाक्षुषत्वं कल्प्यताम्, सर्वथैव यदञ्जनप्रख्यं साभ्रनक्षत्रं प्रतीयते तस्यैव प्रतिबिम्बनं प्रतीयत इति बिंबस्य न चाक्षुषत्वाभावः, तस्याकाशा नाकाशत्वे नेदानीं विवदितव्यम्। किंच ब्रह्मणस्सर्वपदार्थेष्वपि अन्तर्बहिश्च व्याप्य वर्तमानस्य कथं तत्रैव प्रतिबिम्बनम्? न हि जले वर्तमानस्य तत्रैव प्रतिबिम्बनं दृश्यते। दृश्यते ह्याकाशस्येति चेन्न;— जलान्तःस्थितप्रदेशातिरिक्तप्रदेशस्यैव तत्र प्रतिबिम्बनात्; अत एव हि तत्र नैल्यं साभ्रनक्षत्रत्वं चोपलभ्यते; एतेन द्विगुणीकृत्य वृत्त्यर्थे प्रतिबिंबकल्पनमिति निरस्तम्; न चात्रापि प्रदेशान्तरस्यैव प्रतिबिम्बनम्, स्वाभाविकप्रदेशभेदासिद्धेः; औपाधिकोऽस्त्विति चेत्? कोऽयमुपाधिः? अविद्यातदभावाविति चेन्न;— प्रतियोगितदभावयोरेकत्रासम्भवात्; वृक्षादौ मूलाद्यवच्छेदेन भेदो वाच्य इति त्वयैवोक्तेः; न चात्राप्यवच्छेदकान्तरात् भेदः, अनवस्थापातात्, त्वयैव जीवब्रह्मानाक्रान्तं चैतन्यमिदानीं नास्तीत्युक्तत्वाच्च; किञ्चोपाधिप्रतिस्फालनेन निवृत्तनायनरश्मीनां प्रतिबिम्बज्ञानकारणतया लोकसिद्धत्वात् कथं तदभावे ब्रह्मणः प्रतिबिम्बसम्भवः, परावृत्त्यधीनसन्निकर्षाभावादेव हि जलस्थस्य न जले प्रतिबिम्बदर्शनम्? अन्यत्वान्न तदपेक्षेति चेत्, तर्हि प्रतिबिम्बप्रतीतिकारणाभावेपि तामभ्युपगच्छतः परमसाहसिकस्य तवोपाधिपरित्यागे कियानिव भारः; किञ्चैवमाकाशप्रतिबिम्बकथनं चानुपपन्नं स्यात्; किञ्च प्रतिबिम्बदर्शनं चैतन्यमेव; तदेव ह्युपाधिसम्बन्धात् स्वात्मानं भिन्नतया पश्यतीति चेन्न;— किं प्रतिबिम्बमुपाधिनिष्ठतया पश्यति, उतोपाध्यभिन्नतया? नाद्यः, अविद्याभिन्नतया स्वात्मानं पश्यच्चैतन्यं कथं तन्निष्ठतया पश्येत्; नचाभेदभानमसिद्धमिति वाच्यम्, तथा सत्यज्ञानस्य तदभेदाप्रतीत्या व्यावहारिकसत्त्वस्याभावप्रसङ्गात्; ननु यथा प्रत्यक्षेणैकत्वेन प्रतीयमान एव चन्द्रे अङ्गुल्यवष्टम्भादिवशाद्द्वित्वप्रतीतिः तथा ऽ विद्योपाधिवशात्तन्निष्ठतया प्रतीयमानस्यापि तदभिन्नत्वप्रतीतिरविरुद्धैवेति चेत्? सत्यम्, तत्र हि द्वित्वं प्रातिभासिकत्वाद्व्यावहारिकैकत्वाविरुद्धमेव, ब्रह्मणि चाज्ञाननिष्ठत्वमज्ञानाभिन्नत्वं चोभयं व्यावहारिकमेवेति कथं तयोस्सम्भवः; न द्वितीयः, स्वनिष्ठबिम्बभेदभ्रमजनकत्वोक्तिविरो-

किं जीवानामकल्पितेन स्वाभाविकेन रूपेणाविद्याश्रयत्वम्, उत तद्‌तिरिक्तेन तस्मिन् कल्पितेन, अथ कल्पिताकारविशिष्टस्वरूपेण? न प्रथमः, ब्रह्माज्ञानवादप्रसङ्गात्। न द्वितीयः, जडाज्ञानवादावतारात्; जडस्य नित्याज्ञत्वेन तन्निवृत्तेरशक्यत्वप्रसंगाच्च । जडस्य स्वाज्ञाननिवृत्तिवाञ्छानुपपत्तेः, जडस्याज्ञानप्रसंगाभावाच्च, अज्ञाननिवृत्तेः

---

धात्; बिम्बात् भेदज्ञानेपि प्रतिबिम्बादभेदज्ञानमुपपद्यत इति चेन्न,— बिम्बप्रतिबिम्बयोरेकत्वेन तन्निरूपितभेदाभेदयोस्समानसत्ताकयोरेकत्रासम्भवात्; किञ्च— अविद्योपाधिवशाद्भेदप्रतीतिमात्रेण कथं प्रतिबिम्बभावः, तथा सत्यङ्गुळ्यवष्टम्भादिना भिन्नतया प्रतीयमाने चन्द्रेपि तत्कल्पनाप्रसङ्गात्; ननु श्रुतिबलात्तदङ्गीकार इति चेन्न;— श्रुतेस्तत्परत्वासिद्धेः, तथाहि— "अतएवचोपमा सूर्यकादिव" दित्याह सूत्रकारः; अत्र भाष्यम्—"यतो नानाविधेषु स्थानेषु स्थितस्यापि परस्य ब्रह्मणः न तत्प्रयुक्तदोषभाक्त्वं अत एव जलदर्पणादिप्रतिबिम्बितसूर्यादिवत् परमात्मा तत्र तत्रावस्थितोपि निर्दोष इति शास्त्रेषूपमा क्रियते— " आकाशमेकं हि यथा घटादिषु पृथक् भवेत् । तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति ॥

**किं जीवाना** मिति । विशेष्यमात्रस्य भोजनान्वयेपि दण्डी भुङ्क्त इति व्यवहारात् स्वरूपेण तदाश्रयत्वेपि जीवस्याज्ञानाश्रयत्वोक्तिर्न विरुद्धेति भावः । **उत तदतिरिक्तेने** ति । विशेषणमात्रान्वयेपि स्वर्गी ध्वस्त इत्यादि व्यवहारादिति भावः । इष्टापत्तिमाशङ्क्याह— **जडस्ये** ति । नित्यत्वं यावदाश्रयानुबन्धित्वम्, जडस्य यावत्स्वरूपमज्ञतया तस्मिन् सत्येव तदज्ञाननिवृत्तिरनुपपन्नेत्यर्थः । अज्ञानाश्रय एव तन्निवृत्तिरूपा मुक्तिरवश्यं वाच्या, अन्यथा बन्धमोक्षयोर्वैयधिकरण्यप्रसङ्गादिति भावः । ननु जडस्य यावत्स्वरूपानुबन्ध्यज्ञानं ज्ञानाभाव एव, न भावरूपाज्ञानम्, तस्याश्रये विद्यमान एव निवृत्तिरस्त्वित्याशङ्क्य जडत्वात् स्वज्ञाननिवृत्तिवाञ्छानुपपत्तेरज्ञाननिवृत्तेरर्थ्यमाणत्वाभावात् जडत्वादेवाखण्डानन्दावभासाप्रसक्त्या तदनवभासार्थकल्प्ताज्ञानस्याप्यप्रसक्तत्वेन तत्समानाधिकरणतन्निवृत्तेरतत्रासिद्धत्वाच्चाज्ञाननिवृत्तेः पुरुषार्थत्वासम्भवान्मोक्षशास्त्रव्याकोप इत्याह— **जडस्य स्वाज्ञानेत्या** दिना । हेतुद्वयस्यैकसाध्यान्वयेपि द्वितीयहेतौ

पुरुषार्थत्वमपि न स्यात् । नच तृतीयः, तत्र किं स्वकल्पिताकार विशिष्टे वा स्वयमविद्या तिष्ठेत्, अविद्यान्तरकल्पिताकारविशिष्टेवा? पूर्वत्र आत्माश्रयत्वमन्योन्याश्रयणं वा, स्वकल्पिताकार-विशिष्टस्वरूपलाभे सति स्वात्मलाभवर्णनात् । उत्तरत्राप्युक्तचोद्याव तारे अविद्यान्तरापेक्षायां अन्योन्याश्रयचक्रकानवस्थान्यतमापत्तेः । किञ्च सर्वजीवभेदकल्पिकाविद्या किमेका, उत प्रतिजीवं भिन्ना? पूर्वत्र एकमुक्तावविद्याविनाशात् सर्वमुक्तिप्रसंगे कथं बद्धमुक्तव्यव-

---

जडपदस्य हेतुपरत्वान्न वैयर्थ्यमिति ध्येयम् । तृतीयेपि ब्रह्मजडाज्ञानवादः पूर्वोक्तस्तदवस्थ एव । अज्ञानस्य व्यासज्यवृत्तित्वाभ्युपगमे च मुक्तिसंसारयोरपि तथात्वापत्तिरित्यभिप्रायेणाह– न च तृतीय इति । विकल्पमुखेन दूषणान्तर माह– तत्रे ति । किं स्वकल्पिताकारः स्वयमेव, उत धर्मान्तरम्? नाद्य इत्याह पूर्वत्रे ति । द्वितीय आह– अन्योन्ये ति । ननु अविद्या स्वकल्पिताकार विशिष्टमात्मानमाश्रयति चेत् कथमात्माश्रयः, कथञ्चान्योन्याश्रयः, आश्रयणस्य कल्पिताकारवैशिष्ट्यापेक्षायामपि स्वरूपे तदनपेक्षणादित्यत्राह– स्वकल्पिते ति । कदाचिदप्यज्ञानस्य निराश्रयत्वानङ्गीकारादिति भावः । अविद्यान्तरकल्पिता कारविशिष्टे अविद्या तिष्ठतीति द्वितीयपक्षे तस्याविद्यान्तरस्य स्वकल्पिताकार विशिष्टे वृत्त्यङ्गीकारे पूर्ववदात्माश्रयान्योन्याश्रयान्यतरापातेनाविद्यान्तरकल्पिता कारविशिष्टाश्रयत्वे वक्तव्ये तस्याविद्यान्तरस्य स्वनिर्वाह्याश्रयताकाविद्यापेक्षाया मन्योन्याश्रयः, स्वनिर्वाह्यनिर्वाह्याविद्यान्तरापेक्षायां चक्रकम्, तत्परिजिहीर्षया अविद्यान्तरापेक्षायामनवस्थापात इत्याह– उत्तरत्रे ति । एवमज्ञानस्य जीवाश्रयत्वे दोषमुक्त्वा प्रसङ्गादज्ञाने दूषणान्तरमप्याह– किञ्चे ति । सर्वमुक्तिप्रसङ्ग इत्यनन्तरं कथमन्यस्य बन्ध इत्यध्याहार्यम् । एकमुक्तावविद्याविनाशात् सर्वमुक्तिप्रसङ्गे कथमन्यस्य बन्धः, अन्यस्यामुक्तत्वे च प्रत्यक्षसिद्धेऽविद्यास्थि-त्यवश्यम्भावात् कथमेकस्यापि मोक्षः, ततश्च कथं बद्धमुक्तव्यवस्थेति योजनीयम् । एकस्य मुक्तत्वात् सर्वमुक्तिर्वा स्यात् एकस्य बद्धत्वात् सर्वबन्धो

स्था; अन्यस्यामुक्तत्वे त्वविद्यास्थित्यवश्यम्भावात् कथमेकस्यापि मोक्षः। उत्तरत्रापि जीवभेदे स्थिते तन्मूलाविद्याभेदक्लृप्तिस्तन्निश्चयाच्च जीवभेदक्लृप्तिरिति परस्पराश्रयणम्। नच सत्यो जीवभेदस्त्वयेष्यते। नच तदा तत्सिद्ध्यर्थमविद्याकल्पनमपेक्ष्यते। प्रत्यक्षादिसिद्धजीवभेदानुसारेण तत्कल्पकाविद्याभेदक्लृप्तौ को विरोध इति चेन्न;—प्रत्यक्षादिसिद्धस्य जीवभेदस्य अस्मन्मतेन सत्यतायां तन्मूलभूताविद्याकल्पनवैयर्थ्यात्। ब्रह्माज्ञानवादेन तु जीवभेदस्य मिथ्यात्वेनैव जीवैक्यात् तद्भेदक्लृप्त्यर्थाविद्याभेदक्लृप्त्यनुपपत्तेः।

---

वा स्यात् न तु व्यवस्थेति वाक्यार्थः। यद्वा नाध्याहारः कार्यः, किन्तु सर्वमुक्तिप्रसङ्गस्य व्यवस्थाविरह एव साध्यः। मास्तु व्यवस्थेत्यत्राह—**अन्यस्ये** ति। त्वदीयबन्धस्येदानीं प्रत्यक्षसिद्धत्वात् कथमेकस्यापि शुकवामदेवादेर्मुक्ततया प्रमाणप्रसिद्धिरित्यर्थः। **उत्तरत्रे** ति। जीवभेदे निश्चिते तद्भेदोपपादकतया अविद्याभेदक्लृप्तिः, क्लृप्ते चाविद्याभेदे उपाधिभेदे उपाधेयभेदस्यावश्यकतया जीवभेदक्लृप्तिरिति परस्पराश्रय इत्यर्थः। ननु त्वन्मत इव जीवभेदनिश्चयस्य-नोपाधिभेदनिश्चयाधीनतेत्याशङ्क्य, अस्मन्मते जीवभेदस्य सत्यतया उपाध्यनपेक्षत्वान्न जीवभेदज्ञानस्योपाधिभेदज्ञानापेक्षा, त्वन्मते चाविद्योपाधिकत्वा जीवभेदस्य तज्ज्ञानमुपाधिभेदज्ञानापेक्षमेव, न हि घटादिभेदज्ञानाभावे आकाशभेदज्ञानं दृष्टमित्यभिप्रायेणाह— **न च सत्य** इति। गत्यन्तराभावात् जीवभेदस्य सत्यत्वमिष्यत इत्याशङ्क्य, तथा सत्यविद्याभेदकल्पनमेवानुपपन्नमित्याह— **न च तदे** ति। ननु प्रत्यक्षेण श्रुतिस्मृतिभ्यां च जीवभेदस्य सिद्धौ स्वाभाविकस्य तस्य श्रुतिस्मृतिभ्यामेव निरासात् तस्यौपाधिकत्वे ऽवश्य वाच्ये सति तत्सिद्धये अविद्याभेदकल्पनमुपपद्यत एव, आकाशादिभेदे तु तथा मानाभावादुपाधिभेदप्रतीत्यैव तद्भेदप्रतीतिरित्याशंकते— **प्रत्यक्षादी** ति। किं प्रत्यक्षादिसिद्धो जीवभेद अस्मन्मत इव सत्यतयेष्यते, उत ब्रह्माज्ञानमत इव मिथ्यात्वेन, इति विकल्पमभिप्रेत्य क्रमेण दूषयति—**प्रत्यक्षे** ति। **मिथ्यात्वेने** ति।

उभयपक्षोल्लंघिनः परमार्थस्य वाऽपरमार्थस्य वा भवदभिमतस्य जीव भेदस्याप्यसिद्धेः। किंच—याभिरविद्याभिर्जीवाः कल्प्यन्ते किं तासां ब्रह्मैवाश्रयः, उत जीवा एव? आद्ये ब्रह्माज्ञानमपरिहार्यम्। द्वितीये भिन्नजीवाश्रयाविद्याभेदासिद्धौ जीवभेदः, तत्सिद्धौ च तदाश्रयाविद्या भेदसिद्धिरिति मिथस्संश्रयः। अथ जीवभेदकल्पनार्थं नाविद्यान्तरापेक्षा, बद्धमुक्तव्यवस्थासिद्ध्यर्थं कल्पिताभिरेवाविद्याभिर्जीवभेदस्यापि सिद्धिरिति चेन्न;— प्रागुक्तपरस्पराश्रयानतिलंघनात्। बीजांकुरन्यायेन तदुल्लंघनमिति चेत्? किं याभिरविद्याभिर्ये जीवाः कल्प्यन्ते तासां तज्जीवाश्रयाणामेव बीजांकुरन्यायमिच्छसि, उत पूर्वपूर्वजीवाश्रयाभिरविद्याभिरुत्तरोत्तरजीवक्लृप्तिः? न प्रथमः, तत्र बीजांकुर

---

अभावेनेत्यर्थः। नहि ब्रह्माज्ञानवादे व्यावहारिकोपि जीवभेदोऽस्ति, प्रमाणं चान्तःकरणावच्छिन्नभेदविषयम्, न जीवभेदविषयमिति भावः। नन्वस्तु जीवभेदस्य सत्यत्वम्, तथापि न सिद्धान्तिमत इव स्वाभाविकत्वम्, किन्त्वाकाशादिभेदव दौपाधिकत्वमेवास्तु, अतः कथमविद्यानपेक्षा; अथवा जीवभेदो मिथ्यैवास्तु, अथापि न ब्रह्माज्ञानमत इव मिथ्या, किन्तु व्यावहारिक इत्याशंक्याह—उभयपक्षेति। स्वाभाविकभेदसत्यत्वमतोल्लंघिन औपाधिकसत्यस्य जीवभेदस्य मानाभावा देवासिद्धेः, अत एव जीवभेदासिद्धिमतोल्लङ्घिनो व्यावहारिकस्य वा जीवभेदस्यासिद्धेरित्यर्थः। यथा चासिद्धिस्तथा वादान्तरे द्रष्टव्यमिति भावः। अपी त्यतः प्राक् अथे ति पतितमिति प्रतिभाति। अथवा, भवदभिमतस्येत्यस्यापरमार्थस्येत्यर्थः, परमार्थस्य वा अपरमार्थस्यापि वेति योज्यम्। अपिशब्देनैव वा वा—शब्दार्थो विवक्षितः। उत्तरपक्ष एवाह— किञ्चे ति। अपरिहार्य मिति। तत्र चानुपपत्तिरुक्तैवेति भावः। द्वितीये अविद्याभेदे सति जीवभेदः, तस्मिंश्च सति भिन्नजीवाश्रयत्वम्, तस्मिंश्च सति अविद्याभेद इति चक्रकमभिप्रेत्याह—द्वितीय इति। अनन्तरोक्तान्योन्याश्रयपरिहारं शङ्कते—अथ जीवे ति। बद्धे ति। इदानीं बन्धस्यानुभवात् शुकादिमुक्तेश्च प्रमाणसिद्धत्वात् स्वाभाविकभेदस्य च निषेधादिति भावः। वादाद्युक्तमन्योन्याश्रयं स्मारयति— प्रागुक्ते ति।

न्यायस्यासम्भवात् ; नहि यदङ्कुरोत्पादकं यद्बीजं तदेव तस्यारम्भकम् । नापि द्वितीयः, जीवानां भंगुरत्वादिप्रसङ्गेन जीवनित्यत्वाजडत्वादिश्रुतिविरोधात्; अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गाच्च । सन्तानैक्यादविरोध इति चेन्न;– क्षणभंगवादस्य दुर्निरसनत्वप्रसंगात् । जीवब्रह्मणोरत्यन्तवैदेशिकत्वप्रसंगाच्च । अथ ब्रह्मण एव पूर्वपूर्वजीवभावाश्रयाभिरविद्याभिरुत्तरोत्तरजीवभावप्रकल्पनमिति मन्यसे, तदपि दत्तोत्तरम्, अविद्याप्रवाहकल्पितजीवभावस्यापि तद्वत्प्रवाहानादित्वे ध्रुवरूपताभंगप्रसङ्गात् । नच तदिष्टम्, आमोक्षाज्जीवभावस्य ध्रुवत्वाभ्युपगमात् । यत्त्ववस्तुरूपायामविद्यायां नेतरेतराश्रयत्वादयो वस्तुदोषाः क्षतिमावहन्तीति, तद्ब्रह्माज्ञानवादे दुर्घटत्वपक्षदूषणेनैव निरस्तम् । एवं च सति ब्रह्माज्ञानवादे मुक्तानामज्ञानसद्भावे को विरोधः । शुद्धविद्यास्वरूपे तत्र तेजसीव तमसः कथमशुद्धेस्सम्भव इति चेन्न;- अवस्तुभूतायामसम्भवस्यैव त्वया गुणत्वस्वीकारात् । अन्यथा कथं प्रागुक्तेषु बाधकेषु जीवत्सु जीवाश्रयाविद्याक्लृप्तिः । तेन जीवाश्रयाविद्यामपि दुर्घटय, सुघटय वा ब्रह्माश्रयाविद्यामेव ।

यत्तु मिथस्संश्रयादिपरिहाराय स्वरूपत एव जीवकल्पिकाविद्यानां तत्कल्पितजीवानां चानादित्वमस्त्वित्यन्वारूढम्, तत्र किमेकैकजीवकल्पिकाविद्या जीवानां जीवान्तरदर्शने कारणम्, नवा?

---

तदेव तस्यारम्भक मिति । तदङ्कुरमेव तद्बीजारम्भकमित्यर्थः । भङ्गुरत्वादीति। आदिशब्देनोत्पत्तिर्गृह्यते । वैदेशिकत्वप्रसङ्गा दिति । भेदप्रसङ्गादित्यर्थः । एकस्य ब्रह्मणोऽनन्तैर्जीवैरभेदानुपपत्तेरिति भावः । जीवभावाश्रयाभि रिति । जीवभावाधीनाभिरित्यर्थः । दत्तोत्तरत्वमेवोपपादयति– अविद्ये ति । तद्व दिति ।

पूर्वत्र जीवान्तरदर्शनस्यापि भ्रमरूपत्वात् तथैवानन्तजीवक्लृप्तिरनिवार्या। तथाच जितमेकजीववादेन, लाघवात्; दोषाणां चाविशिष्टत्वात्। उत्तरत्र जीवानां परस्परवार्तानभिज्ञत्वप्रसंगेन वादिप्रतिवादिशिष्याचार्यादिव्यवस्थाभंगः।

यत्पुनरुक्तं प्रतिबिम्बश्यामतादेरिव जीवाशुद्धेरपि मिथ्यात्वाज्ज्ञाननिवर्त्यत्वमुपपद्यत इति; तदप्यसत्, अशुद्धिनाशे तत्तदशुद्धिहेतुभूताविद्याख्योपाधिविगमे च प्रतिबिम्बस्थानीयो जीवस्तिष्ठति वा, नवा? तिष्ठति चेदाविद्यकभेदस्थितेरनिर्मोक्षः। नचे

---

जीववदित्यर्थः। पूर्वत्रे ति। एकस्य जीवस्य इतरजीवदर्शनं हि भ्रमरूपमेव, अतस्तत्रार्थाभावात् सोपि स्वाप्नजीवान्तरवत्तदविद्याकल्पित इति वाच्यम्, एवं जीवान्तरस्यापि जीवान्तरदर्शनं भ्रमरूपमिति तद्दृष्टजीवान्तरमपि तदविद्याकल्पितं वाच्यम्, ततश्चानेकजीववादे प्रतिस्वप्नन्यायेन बहुजीवकल्पनाप्रसङ्गात् एकएव जीवः स्वाप्नन्यायेन तत्कल्पितं जीवान्तरमित्यङ्गीकारे लाघवमिति एकशरीरैकजीववाद एव वरमित्यर्थः। अनेकजीववाद एवाज्ञानस्य जीवाश्रयत्वाङ्गीकारात् अनेकजीवनिरासे अज्ञानस्य जीवाश्रयत्वमपि निरस्तं भवतीति भावः। यद्येकजीववादेप्यज्ञानस्य जीवाश्रयत्वमज्ञानजीवयोरनादित्वाच्चान्योन्याश्रयपरिहारश्चोच्येत, तदानीमपि ब्रह्मजडाज्ञानवादावतारः, व्यासज्यवृत्तित्वे संसारमोक्षयोरपि तथात्वप्रसङ्गः, जीवस्याज्ञानाश्रयत्वेपि ब्रह्मणोपि तत्प्रसङ्गः, बिम्बप्रतिबिंबयोर्धर्मव्यवस्थानुपपत्तिः, प्रतिबिम्बस्योपाध्याश्रयत्वानुपपत्तिरित्यादिसाधारणदूषणान्यनुसन्धेयानि। नन्वनेकजीववादेपि न प्रतिजीवं बहुजीवक्लृप्तिः, एका विद्याकल्पितजीवस्याविद्यान्तरकल्पितजीवप्रतिभासोपपत्तेरिति चेन्न;— तदविद्याकल्पितत्वाभावे तत्प्रतिभासानुपपत्तेः, अन्यथा शुक्तिरजतस्यापि साधारणत्वप्रसङ्गात्। ननु शुक्तिरजतवज्जीवान्तरमपि परोक्षत एव ज्ञायत इति न दोष इति चेत्? किं तत्परोक्षज्ञानम्? किं वृत्तिः, उत तदुपलक्षितचैतन्यम्, उत तद्विशिष्टम्? नाद्यः, वृत्तेः जडत्वात्; न द्वितीयः, तस्यापरोक्षत्वात्; उक्तदोषाभ्यामेव न तृतीयोपि। वृत्तिप्रतिबिम्बितजीवचैतन्यं तदिति चेन्न, किं

ज्जीवस्य स्वरूपोच्छित्तिरेव मोक्षः स्यादित्यवैदिकमतावतारः । मुखा त्मना प्रतिबिम्बमिव ब्रह्मात्मना जीवस्तिष्ठतीति चेत् ? किं प्रतिबिंब स्यात्मा मुखम्? तथा सति सत्यमिथ्यैक्यादिप्रसंगात् । अत एव दार्ष्टान्तिकमपि निरस्तम् । किञ्च यस्य ह्यपुरुषार्थरूपो दोषः स्वनिष्ठतया प्रतिभासते तस्य तदुच्छेदापेक्षा स्यात् , तत्र किं बिम्बस्थानीयेन स्वात्मनैव स्वगताशुद्धिं पश्यति ब्रह्म, उत प्रतिबिम्बस्थानीयेन जीवात्मना, उतान्येन केनचिदात्मना, अथान्य एव कश्चित्पुरुषस्थानीयः पश्यतीति ? न प्रथमः, ब्रह्माज्ञानवादप्रसङ्गात् । न द्वितीयः, स्वाशुद्धिनिवृत्तेः प्रतिबिम्बवत्स्वानाशाविनाभावेन तदुच्छेदापेक्षाविरहप्रसङ्गात् ।

---

तज्ज्ञातृत्वं तज्ज्ञानरूपत्वम्, उत तज्ज्ञानाश्रयत्वम् ? आद्ये कथं जीवस्य जीवा न्तरज्ञानम्, जीवप्रतिबिंबस्यैव तज्ज्ञातृत्वात् । बिंबप्रतिबिंबधर्मव्यवस्थायास्त्वयैव कल्पनात् । द्वितीयेपि न जीवस्य जीवान्तरज्ञातृत्वसिद्धिः, बिम्बस्य प्रतिबिम्बाश्रयत्वासिद्धेः । **मुखात्मने** ति । बिंबमुखात्मनेत्यर्थः । **सत्यमिथ्यैक्यादि प्रसङ्गा** दिति । यथाच प्रतिबिम्बस्य मिथ्यात्वं तन्मते वाच्यं तथोपपादितं प्राक् । प्रतिबिम्बनाशे बिंबनाशः स्यात् इत्यादिशब्देन विवक्षितम् । किञ्चाशुद्धिनिरासश्च तत्साधनानुष्ठानादेव, नान्यथा श्रवणादिविधानवैयर्थ्यापत्तेः, तदनुष्ठानं च तत्फलभूताशुद्धिनिवृत्तीच्छां विना नोपपद्यते, तदिच्छायाश्च त्वन्मते असम्भवात् नाशुध्युच्छेदोपपत्तिरित्याह **किंचे** ति । **बिम्ब स्थानीयेने** ति । लोकसिद्धमुखादिबिम्बस्थानीयेनेत्यर्थः । **प्रतिबिम्बस्था नीयेने** ति । लोकसिद्धमुखादिबिम्बस्थानीयेनेत्यर्थः । **प्रतिबिम्बव** दिति । मुखादिप्रसिद्धप्रतिबिम्बस्थले श्यामतादिनिवृत्तेः प्रतिबिम्बनिवृत्त्यविनाभाववदित्यर्थः । किञ्च किं ब्रह्मजीवयोर्बिम्बप्रतिबिम्बभावो मुख्यः, उतामुख्यः ?

ततो भागीरथीतीरे कदाचिन्निर्जने वने ।
धात्रीद्वितीयो बालः स क्रीडार्थं पर्यधावत् ॥३१॥
पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः ।
सहसोत्पतितं व्याघ्रमाससाद महाबलम् ॥३२॥
स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः ।
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ॥३३॥
हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत ।
शार्दूलो देवराजस्य माययान्तर्हितस्तदा ॥३४॥
धात्र्यास्तु निनदं श्रुत्वा रुदत्याः परमार्तवत् ।
अभ्यधावत तं देशं स्वयमेव महीपतिः ॥३५॥
स ददर्श शयानं तं गतासुं पीतशोणितम् ।
कुमारं विगतानन्दं निशाकरमिव च्युतम् ॥३६॥
स तमुत्सङ्गमारोप्य परिपीडितवक्षसम् ।
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः॥३७॥
ततस्ता मातरस्तस्य रुदत्यः शोककर्शिताः ।
अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ॥३८॥
ततः स राजा सस्मार मामेव गतमानसः ।
तदाहं चिन्तनं ज्ञात्वा गतवांस्तस्य दर्शनम् ॥३९॥
मयैतानि च वाक्यानि श्रावितः शोकलालसः ।
यानि ते यदुवीरेण कथितानि महीपते ॥४०॥
सञ्जीवितश्चापि पुनर्वासवानुमते तदा ।
भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ॥४१॥
तत ऊर्ध्वं कुमारस्तु स्वर्णष्ठीवी महायशाः ।
चित्तं प्रसादयामास पितुर्मातुश्च वीर्यवान् ॥४२॥

कारयामास राज्यं च पितरि स्वर्गते नृप ।
वर्षाणां शतमेकं च सहस्रं भीमविक्रमः ॥४३॥
तत ईजे महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।
तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ॥४४॥
उत्पाद्य च बहून् पुत्रान् कुलसन्तानकारिणः ।
कालेन महता राजन् कालधर्ममुपेयिवान् ॥४५॥
स त्वं राजेन्द्र संजातं शोकमेनं निवर्तय ।
यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः ॥४६॥
पितृपैतामहं राज्यमास्थाय धुरमुद्वह ।
इष्ट्वा पुण्यैर्महायज्ञैरिष्टं लोकमवाप्स्यसि ॥४७॥

वैशम्पायन उवाच ।

तूष्णींभूतं तु राजानं शोचमानं युधिष्ठिरम् ।
तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनो ऽब्रवीत् ॥४८॥

व्यास उवाच ।

प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मोऽनुवर्त्यताम् ॥४९॥
अनुतिष्ठस्व तद्राजन् पितृपैतामहं पदम् ।
ब्राह्मणेषु तपो धर्मः स नित्यो वेदनिश्चितः ॥५०॥
तत्प्रमाणं ब्राह्मणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥५१॥
तथा यः प्रतिहन्त्यस्य शासनं विषये नरः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥५२॥
प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।

भृत्यो वा यदि वा पुत्रस्तपस्वी वाथ कश्चन ॥५३॥
पापान् सर्वैरुपायैस्तान्नियच्छेच्छातयीत वा ।
अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम् ॥५४॥
धर्मं विनश्यमानं हि यो न रक्षेत् स धर्महा ।
ते त्वया धर्महन्तारो निहताः सपदानुगाः ॥५५॥
स्वधर्मे वर्तमानस्त्वं किन्नु शोचसि पाण्डव ।
राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥५६॥

युधिष्ठिर उवाच ।

न तेऽतिशङ्के वचनं यद्ब्रवीषि तपोधन ।
अपरोक्षो हि ते धर्मः सर्वधर्मविदां वर ॥५७॥
मया त्ववध्या बहवो घातिता राज्यकारणात् ।
तानि कर्माणि मे ब्रह्मन् दहन्ति च पचन्ति च ॥५८॥

व्यास उवाच ।

ईश्वरो वा भवेत्कर्ता पुरुषो वापि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥५९॥
ईश्वरेण नियुक्तो हि साध्वसाधु च भारत ।
कुरुते पुरुषः कर्म फलमीश्वरगामि तत् ॥६०॥
यथा हि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत्पापं परशोर्न कथंचन ॥६१॥
अथवा तदुपादानात्प्राप्नुयात्कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥६२॥
न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥६३॥
अथापि पुरुषः कर्ता कर्मणोः शुभपापयोः ।

न परो विद्यते तस्मादेवमेतच्छुभं कृतम्॥६४॥
न हि कश्चित्क्वचिद्राजन्दिष्टं प्रातिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥६५॥
यदि वा मन्यसे राजन् हतमेकं प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥६६॥
अथाभिपत्तिर्लोकस्य कर्तव्या पुण्यपापयोः।
अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् ॥६७॥
तथापि लोके कर्माणि समावर्तन्ति भारत ।
शुभाशुभफलं चैते प्राप्नुवन्तीति मे मतिः ॥६८॥
एवम्पश्य शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज त्वं राजशार्दूल मैवं शोके मनः कृथाः ॥६९॥
स्वधर्मे वर्तमानस्य सापवादेपि भारत ।
एवमात्मपरित्यागस्तव राजन्न शोभनः ॥७०॥
विहितानि हि कौन्तेय प्रायश्चित्तानि कर्मणाम् ।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् ॥७१॥
तद्राजन् जीवमानस्त्वं प्रायश्चित्तं करिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्तासि भारत ॥७२॥

युधिष्ठिर उवाच ।

हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाश्च पितामहाः ॥७३॥
क्षत्रियाश्च महात्मानः सम्बन्धिसुहृदस्तथा ।
वयस्या भागिनेयाश्च ज्ञातयश्च पितामह ॥७४॥
बहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयैकेन पितामह ॥७५॥

तांस्तादृशानहं हत्वा धर्मनित्यान् महीक्षितः ।
असकृत्सोमपान्वीरान्किं प्राप्स्यामि तपोधन ॥७६॥
दह्याम्यनिशमद्यापि चिन्तयानः पुनःपुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥७७॥
दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानन्यान् परितप्ये पितामह ॥७८॥
का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति ।
विहीनानां तु तनयैः पतिभिर्भ्रातृभिस्तथा ॥७९॥
अस्मानन्तकरान् घोरान् पाण्डवान् वृष्णिसंहतान् ।
आक्रोशन्त्यः कृशा दीनाः प्रपतिष्यन्ति भूतले ॥८०॥
अपश्यन्त्यः पितॄन् भ्रातॄन् पतीन्पुत्रांश्च योषितः ।
त्यक्त्वा प्राणान् स्त्रियः सर्वा गमिष्यन्ति यमक्षयम् ॥८१॥
वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् ॥८२॥
ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नरके निपतिष्यामो ह्यधःशिरस एव ह ॥८३॥
शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ।
आश्रमाणां विशेषं त्वमथाचक्ष्व पितामह ॥८४॥

इति श्रीमहाभारते शान्तिपर्वणि राजधर्मे
प्रायश्चित्तविधिर्नाम
एकत्रिंशोऽध्यायः ॥ ३१ ॥

---

श्रीरस्तु ।

अथ द्वात्रिंशोऽध्यायः ।

वैशम्पायन उवाच ।

युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
निरीक्ष्य निपुणं बुद्धया ऋषिः प्रोवाच पाण्डवम् ॥१॥

व्यास उवाच ।

मा विषादं कृथा राजन् क्षत्रधर्ममनुस्मरन् ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥२॥
कांक्षमाणाः श्रियं कृत्स्नां पृथिव्यां च महद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन निधनङ्गताः ॥३॥
न त्वं हन्ता न भीमोयं नार्जुनो न यमावपि ।
कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ॥४॥
न तस्य मातापितरौ नानुग्राह्यो हि कश्चन ।
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ॥५॥
हेतुमात्रमिदं तस्य विहितं भरतर्षभ ।
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥६॥
कर्ममूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥७॥
तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकानि त्वं यैस्ते कालवशं गताः ॥८॥
आत्मनश्च विजानीहि नियतव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाक्रम्य कारितः ॥९॥
त्वष्ट्रेव विहितं यन्त्रं यथा चेष्टयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं चेष्टते जगत् ॥१०॥

पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥११॥
व्यलीकमपि यत्त्वत्र चित्तैवतंसिकं तव ।
तदर्थमिष्यते राजन् प्रायश्चित्तं तदाचर ॥१२॥
इदन्तु श्रूयते पार्थ युद्धे देवासुरे पुरा ।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥१३॥
तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल ॥१४॥
एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तथा देवास्त्रिदिवं चाभिलेभिरे ॥१५॥
तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां वै साह्यार्थे दर्पमोहिताः ॥१६॥
सालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥१७॥
धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्बणाः ॥१८॥
एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वा च राष्ट्रं च न तद्वृत्तोपघातकम् ॥१९॥
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मरूपो ह्यधर्मश्च तच्च ज्ञेयं विपश्चिता ॥२०॥
तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वगतं मार्गमनुयातोसि भारत ॥२१॥
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ ।
भ्रातृनाश्वासयैतांस्त्वं सुहृदश्च परन्तप ॥२२॥
यो हि पापसमारम्भे कार्ये तद्भावभावितः ।

कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ॥२३॥
तस्मिंस्तत्कलुषं सर्वं समाप्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥२४॥
त्वंतु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥२५॥
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥२६॥
मरुद्भिः सह जित्वारीन् भगवान् पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥२७॥
धूतपाप्मा जितस्वर्गो लोकान् प्राप्य सुखोदयान् ।
मरुद्गणैर्वृतः शक्रः शुशुभे भासयन् दिशः ॥२८॥
स्वर्गे लोके महीयन्तमप्सरोभिः शचीपतिम् ।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥२९॥
सेयं त्वामनु सम्प्राप्ता विक्रमेण वसुन्धरा ।
निर्जिताश्च महीपाला विक्रमेण त्वयानघ ॥३०॥
तेषां पुराणि राष्ट्राणि गत्वा राजन् सुहृद्वृतः ।
भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥३१॥
बालानपि च गर्भस्थान् सान्त्वेन समुदाचरन् ।
रञ्जयन् प्रकृतीः सर्वाः परिपाहि वसुन्धराम् ॥३२॥
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यसि ॥३३॥
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥३४॥
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥३५॥

[दी] द्रव्ये च संयोगादेरपि वृत्तेः। नैवम्;–साध्यतावच्छेदकसम्बन्ध सामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात् ।

---

तथाच यत्किंचिद्व्यक्तीत्यन्तेन न सामान्याद्युपादानसम्भव इति भावः। द्रव्य इति । तथाच द्रव्यमपि यत्किंचिद्व्यक्तिपदेनोपादाय तादृशाभावस्य न तथात्वं शक्योपादानमिति भावः । **साध्यतावच्छेदकसम्बन्धसामान्ये उभयाभावस्य विवक्षितत्वादिति** योजना। तथाच स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वमभावेस्वप्रतियोगितावच्छेदकेत्यत्र स्वावच्छेदकत्वं प्रक्षिप्य तादृशाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वं प्रतियोगितायां वा विशेषणं देयमिति भावः । जलादिसंयोगे वह्न्यादिप्रतियोगिकत्वधूमवदनुयोगिकत्वोभयाभावसत्त्वेपि साध्यतावच्छेदकसम्बन्धसामन्यान्तर्गततत्तद्धूमाधिकरणानुयोगिकवह्निसंयोगे वह्निप्रतियोगिकत्वतत्तदधिकरणानुयोगिकत्वोभयाभावासत्त्वान्न वह्न्यभावस्य लक्षणघटकतेति घटाद्यभावमादाय वह्निमान् धूमादित्यादौ लक्षणसमन्वयः; घटवान् महाकालत्वादित्यादौ पुनरवृत्तिगगनादेरभाव एव लक्षणघटकः, कालिकसम्बन्धसामान्ये तत्प्रतियोगिकत्वाभावे नैवोभयाभावसौलभ्यात्; हेत्वधिकरणानुयोगिकसाध्यतावच्छेदकसम्बन्ध सामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वाभावनिवेशे जातिमान् मेयत्वादित्यादौ उक्तातिव्याप्तिवारणमशक्यम्, सामान्यानुयोगिकसमवायाप्रसिद्ध्या जात्याश्रयानुयोगिकसमवाये च जात्यादिप्रतियोगिकत्वसत्त्वेन जातित्वाद्यवच्छिन्नाभावस्य प्रतियोगिव्यधिकरणत्वानुपपत्तेः; एवं निरुक्तप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वसामान्याभावनिवेशे घटवान् महाकालत्वादित्यादावव्याप्तिवारणमशक्यम्,

[दी] धूमसंयोगे वह्न्यधिकरणायोगोळकानुयोगिकत्वस्य चैत्रान्यत्व विशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरणचैत्रानुयोगिकत्वस्य गुणकर्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य विरहाच्चातिप्रसङ्गः ।

---

गगनत्वविशिष्टप्रतियोगिककालिकसम्बन्धाप्रसिद्धेर्गगनाभावस्य प्रतियोगिव्यधिकरणत्वानुपपत्तेरित्युभयाभावानुसरणम् । यत्किंचित्पदप्रयोजनमाह—**धूमसंयोग** इति । **अयोगोळकानुयोगिकत्वस्ये** ति । **विरहाच्चातिप्रसङ्ग** इत्यग्रेतनेन सम्बन्धः । साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतधूमसंयोगे धूमप्रतियोगिकत्ववह्निमदनुयोगिकत्वयोरुभयोरेव सत्त्वेन तत्सामान्योभयाभावस्य दुर्घटत्वात् यत्किंचित्पदानुपादाने धूमवान् वह्नेरित्यत्रातिव्याप्तिस्स्यात् ; हेत्वधिकरणस्य हेतुमत्त्वेन न निवेशः, किन्तु तद्व्यक्तित्वेन यत्किंचिदेकहेतुमद्व्यक्तेर्निवेश इत्येतल्लाभार्थकतदुपादाने पुनर्हेत्वधिकरणायोगोळकानुयोगिकत्वस्य धूमसंयोगेऽभावादन्यसंयोगे च धूमप्रतियोगिकत्वस्याभावात् संयोगसामान्यस्यैवोभयाभाववत्त्वात् धूमत्वावच्छिन्नाभावोपि लक्षणघटक इति नातिप्रसङ्ग इत्यर्थः । प्रतियोगितावच्छेदकविशिष्टार्थकनिरुक्तपदप्रयोजनं संयोगेन चैत्रान्यत्वविशिष्टैतद्दण्डत्वेन चैत्रनिष्ठदण्डसाध्यके एतद्दण्डहेतौ समवायेन विशिष्टसत्तासाध्यके जात्यादिरूपहेतौ चातिव्याप्तिवारणरूपं दर्शयति—**चैत्रान्यत्वे** ति । निरुक्तपदानुपादाने संयोगसामान्यान्तर्गतचैत्रनिष्ठैतद्दण्डसंयोगे हेत्वधिकरणचैत्रानुयोगिकत्वविशिष्टैतद्दण्डाभावप्रतियोग्येतद्दण्डप्रतियोगिकत्वयोः समवायसामान्यान्तर्गतगुणानुयोगिकसत्तासमवाये च हेत्वधिकरणगुणानुयोगिकत्वविशिष्टसत्ताभावप्रतियोगिसत्ताप्रतियोगिकत्वयोर्द्वयोरेव सत्त्वेन तादृशाभावस्य लक्षणघटकता न स्यादिति

प्रसक्तातिप्रसक्तेस्तद्गुणादावनवकाशः, चैत्रे गुणादौ च संयोगेन समवायेन च विशिष्टदण्डविशिष्टसत्तावैशिष्ट्याप्रत्ययात् तदनुयोगिकसंयोगसमवाययोर्विशिष्टदण्डविशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्वानभ्युपगमेन अन्यानुयोगिकयोश्च तयोश्चैत्रगुणाद्यनुयोगिकत्वाभावेनोभयाभावस्याक्षततया विशिष्टसाध्याभावस्यापि लक्षणघटकत्वादित्यर्थः । अथात्र संयोगेन घटादौ साध्ये घटत्वादावतिव्याप्तिः, संयोगसामान्यान्तर्गतघटपटादिसंयोगे घटाद्यनुयोगिकत्वपटादिप्रतियोगिकत्वोभयसत्त्वेन घटादिनिष्ठघटाद्यभावस्य लक्षणाघटकत्वात्; नच स्वस्मिन् संयोगेन स्वविशिष्टबुद्ध्यनुदयादन्यत्र घटादिविशिष्टबुद्धिमात्रनियामके घटसंयोगे घटप्रतियोगिकत्वमात्रं घटेऽन्यविशिष्टधीमात्रनियामकसंयोगे च तदनुयोगिकत्वमात्रमिति घटानुयोगिकत्वतत्प्रतियोगिकत्वोभयं न कुत्रापि संयोगेऽस्ति, नहि समवायेन संयोगाधिकरणत्वमेव संयोगानुयोगित्वम्, तथासति तत्सम्बन्धानुयोगिताया एव तद्विशिष्टबुद्धिविषयताप्रयोजकत्वेन स्वस्मिन्नपि स्वविशिष्टबुद्ध्यापत्तेर्दुर्वारत्वात्, किन्तु सम्बन्धान्तरमेवेति वाच्यम्,—येन सम्बन्धेन घटेऽन्यविशिष्टधीस्तेनापि सम्बन्धेनान्यत्र कदाचिद्घटविशिष्टबुद्धिजननादेकत्रैव संयोगे घटानुयोगिकत्वघटप्रतियोगिकत्वयोरावश्यकत्वात्; यस्मिन् सम्बन्धे यत्प्रतियोगिकत्वविशिष्टे यदनुयोगिकत्वं तत्सम्बन्धेन तस्यैव तद्विशिष्टप्रमितेः स्वप्रतियोगिकत्वविशिष्टे च संयोगे स्वानुयोगिकत्वानुपगमेन स्वस्मिन् तेन स्वविशिष्टप्रमापत्त्यनवकाशादिति चेन्न;—संयोगेनाधिकरणांशे आधेयस्यैव विशिष्टबुद्धिर्जन्यते न त्वाधेयांशे आधारस्य, आधाराधेयभावानापन्नयोर्वृत्त्यनियामकसंयोगिनोश्च संयोगेन विशिष्टबुद्धेरप्रामाणिकत्वात्, आधेयत्वानुपस्थितिकालीनभूतले घट इत्यादिप्रत्यये घटांशे भूतलादेः प्रकारत्वेपि आधेयताया एव संसर्गतोपगम्यते, नतु संयोगस्य; एवं सति वृत्त्यनियामकस्य गगनादिसंयोगस्य सम्बन्धत्वानुपपत्तेः विशिष्टबुद्धिनिया-

मकस्यैव तथात्वादितिचेत्? का क्षतिः, एवञ्च येन संयोगेनान्यत्र घटविशिष्टबुद्धिर्जन्यते घटस्य तत्संयोगाश्रयानाधारत्वेन घटे न तेनान्य विशिष्टबुद्धिर्जन्यत इति संयोगमात्र एव तत्प्रतियोगिकत्वतदनुयोगिक त्वोभयाभावस्याक्षतत्वात् ।

अथ यद्घटस्य अधोवस्थितपटे येन संयोगेन घटविशिष्टबुद्धि-र्जनिता तेनैव च संयोगेन पटेन समं परिवृत्य स्थापिते तद्घटे पट विशिष्टबुद्धिरपि जन्यते, तत्संयोगे घटानुयोगिकत्वघटप्रतियोगिकत्वोभयो रावश्यकतया संयोगेन घटसाध्यके तद्घटतत्पटान्यतरत्वादावतिव्याप्ति र्दुर्वारैवेति चेत्? एवं सति साध्यतावच्छेदकसम्बन्धानुयोगितासामान्ये निरुक्तप्रतियोगिकत्वविशिष्टनिरूपितत्वहेत्वधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठ-त्वोभयाभाव एव विवक्षणीयः । स्वस्मिन् स्वविशिष्टबुद्ध्यनुदयेन स्वप्रतियोगिकत्वविशिष्टसंयोगनिरूपितत्वस्य स्वनिष्ठानुयोगितायामसत्त्वात्, संयोगीयानुयोगितासामान्ये घटप्रतियोगिकत्वविशिष्टनिरूपितत्वतद्घटनिष्ठ त्वोभयाभावोऽक्षत एव । एवञ्च यदत्र कल्पे समवायैक्यमतेऽति व्याप्तिमुद्भावयिष्यति, तद्यथाश्रुताभिप्रायेणेति ध्येयम् ।

अथ द्रव्यत्वादिकं प्रति पर्याप्तिसम्बन्धेन द्वित्वादेर्व्यापकत्वापत्तिः, हेतुमत एकैकद्रव्यस्य पर्याप्तिसम्बन्धेन द्वित्वाद्यनधिकरणत्वेपि द्वित्वादि पर्याप्तौ हेत्वधिकरणतत्तद्व्यक्त्यनुयोगिकत्वाभावासत्त्वादिति द्रव्यत्वादिना पर्याप्तिसम्बन्धेन गगनादौ द्वित्वाद्यनुमानापत्तिः; नचेष्टापत्तिः, एकमात्र विशेष्यकपर्याप्तिसंसर्गकव्यासज्यवृत्तिधर्मप्रकारकबुद्धेर्भ्रमतया सल्लिङ्गकपरा मर्शात्तादृशानुमित्यभ्युपगमासम्भवात्; नचैकमात्रवृत्तिधर्मावच्छेदेन द्वित्वा दिपर्याप्तेरेकैकस्मिन्नसत्त्वेप्युभयवृत्तिधर्मावच्छेदेन तत्पर्याप्तिसत्त्वात् तेन सम्बन्धेन तद्वति तत्प्रकारकत्वरूपप्रमात्वं दुर्वारमिति वाच्यम्, तद्या-घृत्तप्रमालक्षणस्यापि कथंचिन्निर्वचनसम्भवादिचेन्न ;— उद्देश्यतावच्छेदका

नतिरिक्तवृत्तित्वाविशेषितपर्याप्तेः क्वचिदपि सम्बन्धत्वानभ्युपगमेन तादृशपर्याप्तिसंसर्गकानुमितेरापादनासम्भवात्, गगनत्वाद्यनतिरिक्तवृत्तित्वविशेषितपर्याप्तेर्द्वित्वादिप्रतियोगिकत्वाभावेन द्वित्वादिनिष्ठव्यापकत्वाघटकतया तादृशसम्बन्धेनापि तदनुमानापत्त्यनवकाशात् । यत्तु हेत्वधिकरणयत्किंचिद्व्यक्त्यनुयोगिकत्वस्थले हेतुमत्त्वपर्याप्त्यवच्छेदकयत्किंचिद्धर्मावच्छिन्नानुयोगिकत्वं निवेश्यम्, द्वित्वादिपर्याप्तौ च द्रव्यत्वादिपर्याप्त्यवच्छेदकैकमात्रधर्मावच्छिन्नानुयोगिकत्वविरहात् न तेन सम्बन्धेन द्वित्वादेः द्रव्यत्वादिरूपप्रत्येकपर्याप्तधर्मव्यापकतापत्तिः; हेतुमद्वृत्तियत्किंचिद्धर्मावच्छिन्नानुयोगिकत्वनिवेशे इमे बहवस्त्रित्वादित्यादौ पर्याप्तिसम्बन्धेन हेतुसाध्यभावेऽव्याप्तिः । हेतुमदेकमात्रवृत्तिधर्मावच्छिन्नानुयोगिताकत्वस्य बहुत्वादिपर्याप्तावसत्त्वेन तादृशसाध्याभावे निरुक्तप्रतियोगिवैयधिकरण्यस्य दुर्वारत्वात्, अतो हेतुपर्याप्त्यवच्छेदकयत्किंचिद्धर्मनिवेश इति । तन्न मनोरमम्; एतादृशरीत्या उक्तकल्पपरिष्कारेपि प्रतियोगिमद्भेदे हेतुपर्याप्त्यवच्छेदकावच्छिन्नानुयोगिकत्वस्याग्रिमकल्पे विवक्षणे आकाशे आकाशघटोभयत्वादित्यादावतिव्याप्तेर्दुर्वारत्वात्, आकाशत्वावच्छिन्नभेदस्य दर्शितहेतुपर्याप्त्यवच्छेदकतदुभयवृत्तिधर्मावच्छिन्नेऽसत्त्वात्, प्रतियोगिवृत्तिधर्मस्य भेदाधिकरणतानवच्छेदकत्वात् । न च व्यासज्यवृत्तिधर्मसाध्यके ईदृशरीतिरुपादेया नान्यत्रेति वाच्यम्, आकाशत्वादेराकाशघटादौ व्यासज्यवृत्तित्वभ्रमदशायां तदवच्छिन्नभेदस्य प्रत्येकहेत्वधिकरणवृत्तित्वग्रहेपि आकाशघटोभयत्वादिहेतुना आकाशत्वाद्यनुमित्युत्पत्त्या तन्निर्वाहाय तत्रापि साधनपर्याप्त्यवच्छेदकावच्छिन्नाधिकरणताकप्रतियोगिमद्भेदघटितव्याप्तिज्ञानहेतुताया वाच्यतया तत्राप्यनुमित्यौपयिकव्याप्तिप्रसिद्ध्यापत्तेः; तस्माद्द्वित्वादिसाध्यकद्रव्यत्वाकाशत्वादिकं सद्धेतुरेव । इमे बहवस्त्रित्वादित्यादावव्याप्तिवारणाय पर्याप्त्यतिरिक्तस्वरूपसम्बन्धेन प्रतियोग्यधिकरणत्वावच्छिन्नस्य भेद एव हेतुमति

[टी] स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु

---

निवेशनीयः, ननु प्रतियोग्यनवच्छिन्नभेदः प्रतियोगिमद्वृत्तिधर्मवत्त्वं वा, तेन मलेकवृत्तिहेतुत्वाद्यवच्छिन्नभेदमादाय न तदभावस्य प्रतियोगिवैयधिकरण्यमित्येव सारम् । इदं तु बोध्यम् ; साध्यतावच्छेदकावच्छिन्नाभावनिरूपितत्वविशिष्टसाध्यवन्निष्ठाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्वमेव प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेति प्रतीकार्थः, महाकालो घटवान् महाकालत्वादित्यादौ च नैतादृशविशेषणाक्रान्ताभावाप्रसिद्धिः, कालिकसम्बन्धावच्छिन्नघटाद्यभावस्यैव तथात्वात्, हेतुमन्निष्ठतदधिकरणतायां साध्याभावाधिकरणताभिन्नत्वसत्त्वेन विशिष्टभेदसत्त्वादित्युभयाभावघटितप्रतियोगिवैयधिकरण्यानुधावनं दीधितिकृतामफलमेव । एवञ्च प्रतियोगिवैयधिकरणस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इत्यादिक्रमेण निर्वचनेऽननुगमात् प्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावकूटनिवेशने व्याप्तेर्दुर्ज्ञेयतेति दूषणान्तरमनवकाशमिति दिक् ।

ननु गगनादेरपि कालिकसम्बन्धेन कालवृत्तित्वमावश्यकम्, अन्यथा तेषां परमार्थसत्त्वानुपपत्तिः, तस्य कालवृत्तित्वरूपत्वात्, एवं कारणत्वानुपपत्तिश्च, तस्य पूर्वकालवृत्तित्वघटितत्वात्, अवृत्तित्वप्रवादश्च तत्र कालिकातिरिक्तसम्बन्धेनावृत्तित्वपरः, इत्थंच कालिकसम्बन्धसामान्ये गगनादिप्रतियोगिकत्वमहाकालानुयोगिकत्वोभयाभावोपि दुर्लभः, तदभावेपि प्रतियोगिवैयधिकरण्यं दुर्घटम्, * एवं विषयितया घटादिसाध्यके नित्यज्ञानत्वादिहेतावपि प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या ऽव्याप्तिर्दुर्वारैव, हेतुमति भगवज्ज्ञानादौ विषयितासम्बन्धेन वस्तुमात्रस्यैव सम्बन्धित्वा

---

* इत्यत आह — स्वरूपसम्बन्धेनेत्यादिना । यद्यपि

द्विषयितासम्बन्धसामान्ये हेत्वधिकरणानुयोगिकत्वघटितोभयाभावस्य दुर्घट त्वादित्यालोच्य कल्पान्तरमाह— स्वरूपसम्बन्धेनेत्यादिना ।

अत्र केचित् - साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगि प्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसाध्यप्रतियोगिकत्वै-तत्त्रित्वावच्छिन्नाभावस्य विवक्षणान्न विषयितासम्बन्धेन घटादिसाध्यके नित्यज्ञानत्वादिहेतावव्याप्तिः, घटाद्यभावस्यैव तेन सम्बन्धेन प्रतियोगि व्यधिकरणत्वात्, घटपटविषयितयोर्भिन्नत्वेन विषयितासम्बन्धसामान्ये तादृशत्रित्वावच्छिन्नाभावस्य सत्त्वात् । नचैतादृशत्रित्वावच्छिन्नाभाव निवेशे स्वरूपसम्बन्धेन गगनादेर्वृत्तित्वेपि न घटादिसाध्यककालत्वादि हेतावव्याप्तिः, प्रतियोगिभेदेन कालिकसम्बन्धस्यापि विभिन्नतया गगना द्यभावस्यैव तादृशप्रतियोगिव्यधिकरणत्वादिति वाच्यम्, कालिकसम्ब न्धेन प्रमेयसामान्यसाध्यकस्थलेऽव्याप्तेः, तत्र सर्वस्यैव साध्यतया कालिक सम्बन्धसामान्य एव साध्यप्रतियोगिकत्वसत्त्वेन उपदर्शितत्रित्वावच्छिन्ना भावस्यासत्त्वात्, प्रमेयसामान्यस्य व्याप्यवृत्तिसाध्यत्वेपि तस्याव्याप्य वृत्तित्वभ्रमदशायामनुमितिरुत्पत्त्यर्थं तत्र प्रतियोगिव्यधिकरणत्वघटितव्याप्त्यु पपादनस्यावश्यकत्वात्; एतल्लक्षणान्यलक्षणवृत्तित्वविशिष्टप्रमेयसामान्यसाध्यक

---

गगनादेः कालिकसम्बन्धेन सम्बन्धित्वेपि ईश्वरज्ञानपक्षके विषय तया घटादौ साध्ये नित्यज्ञानत्वादिहेतावपि प्रतियोगिव्यधिकरणाभावा प्रसिद्ध्याऽव्याप्तिर्दुर्वारैव, हेतुमति भगवज्ज्ञाने विषयतासम्बन्धेन वस्तु मात्रस्यैव सम्बन्धित्वात्, तथापि वृत्त्यनियामकसम्बन्धेन व्यापकत्वा नभ्युपगन्तॄणां तत्र तादृशाभावाप्रसिद्धेरदोषतया कालिकसम्बन्धेन गग नादेर्वृत्तिमत्त्वमते तेन सम्बन्धेन घटादिसाध्यकमहाकालत्वादिहेतावव्याप्ति रेव कल्पान्तरबीजतयोपदर्शिता । पाठान्तरम्—*

कालत्वादिहेतोरव्याप्यवृत्तिसाध्यकत्वेन तत्राव्याप्तेश्च । ननु तथा विषयितासम्बन्धेन प्रमेयसामान्यसाध्यके नित्यज्ञानत्वादिहेतावव्याप्तेस्सम्भवात् कथं तदुक्तिसङ्गतिरिति वाच्यम्, साध्यप्रतियोगिकत्वेत्यनेन साध्यतावच्छेदकविशिष्टप्रतियोगित्वविवक्षणात्प्रमेयत्वविशिष्टघटविषयितातो घटत्वविशिष्टविषयिताया भिन्नत्वेन घटाद्यभावस्य प्रतियोग्यधिकरणत्वात् । नचेश्वरज्ञानीयप्रमेयत्वविशिष्टघटविषयतायां तादृशत्रित्वावच्छिन्नस्य सत्त्वेन कथं तत्र घटाद्यभावस्य प्रतियोगिवैयधिकरण्यमिति वाच्यम्;— निरुक्तप्रतियोगिप्रतियोगिकत्वेन यदभावीयप्रतियोगितावच्छेदकपर्याप्तप्रतियोगितावच्छेदकताकत्वस्य विवक्षणादीश्वरज्ञानीयतादृशविषयितायां प्रमेयत्वस्यापि निरूपकतावच्छेदकत्वेन घटत्वपर्याप्तप्रतियोगितावच्छेदकताकत्वाभावेन घटाद्यभावस्य प्रतियोग्यधिकरणत्वात्; इत्थंच स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वेपि कालिकसम्बन्धेन घटादिसाध्यकस्थलेप्यव्याप्तिस्सम्भवति, प्रमेयत्वादिविशिष्टघटनिरूपितकालिकविशेषणतातो घटत्वविशिष्टघटनिरूपितकालिकविशेषणताया अभिन्नत्वेन कालिकसम्बन्धसामान्ये घटत्वपर्याप्तावच्छेदकत्वाभावेन घटाद्यभावस्यापि प्रतियोग्यधिकरणतया तत्प्रतियोगितावच्छेदकत्वस्य घटत्वे सत्त्वात, इदानीं प्रमेयघटः इदानीं घट इत्यादि प्रत्ययानामेकेनैव कालिकविशेषणत्वेनोपपत्तेः, निरूपकतावच्छेदकभेदेन तादृशसम्बन्धभेदस्यानभ्युपगमात्, अतः कल्पान्तरमनुसरति स्वरूपसम्बन्धेनेत्याहुः । तदसत; तथासति स्वरूपसम्बन्धेन गगनादेरवृत्तित्वेपि नित्यज्ञानीयप्रमेयत्वविशिष्टपटनिरूपितविषयितातो नित्यज्ञानीयघटत्वविशिष्टनिरूपितविषयिताया अभिन्नत्वेपि क्षतिविरहेण विषयितासम्बन्धेन घटादिसाध्यके ईश्वरीयज्ञानमात्रवृत्तिहेतावव्याप्तेदुर्वारत्वात् । एतेन साध्यतावच्छेदकविशिष्टप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तोभयाभावस्य विवक्षणान्न घटवन्नित्यज्ञानत्वादित्यादावव्याप्तिः

सम्बन्धेन घटादिसाध्यके ईश्वरीयज्ञानमात्रवृत्तिहेतावव्याप्तेर्दुर्वारत्वात्, एतेन साध्यतावच्छेदकविशिष्टप्रतियोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तोभयाभावस्य विवक्षणान्न घटवान्नित्यज्ञानत्वादित्यादावव्याप्तिः, तत्र घटत्वविशिष्टनिरूपितविषयितासामान्ये पटप्रतियोगिकत्वाभावेन पटाभावस्यैव प्रतियोगिव्यधिकरणत्वात, स्वरूपसम्बन्धेन गगनादेर्वृत्तित्वे तु घटवान्महाकालत्वादित्यादौ उक्तक्रमेण पर्याप्तिनिवेशस्यावश्यकतया घटाद्यभावस्यापि प्रतियोगिव्यधिकरणतया ऽव्याप्तिः, अतः कल्पान्तरानुसरणमित्यपि परास्तम्, उक्तस्थले साध्यनिरूपितविषयितासम्बन्धसामान्यान्तर्गतप्रमेयत्व विशिष्टघटनिरूपितविषयितायां घटत्वपर्याप्तावच्छेदकताकत्वाभावेन शुद्ध घटत्वविशिष्टनिरूपितविषयितायाञ्च हेत्वधिकरणानुयोगिकत्वाभावेन साध्य निरूपितविषयितासामान्ये उभयाभावस्य सत्त्वादव्याप्तेः ।

तस्मात्प्राचीनमते वृत्त्यनियामकविषयितादिसम्बन्धेन व्याप्त्यनभ्युपगमादुक्तस्थले ऽव्याप्त्यसम्भवात्कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वे घट वान्महाकालत्वादित्यादावव्याप्तिः, अतः कल्पान्तरमनुसरति— **स्वरूपसम्बन्धेने** त्यादिना ।

केचित्तु पूर्वकल्पे प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वसाध्यता वच्छेदकविशिष्टप्रतियोगिकत्वहेतुमद्यत्किञ्चिद्व्यक्त्यनुयोगिकत्वैतत्त्रितयावच्छिन्नाभावविवक्षणे घटवान्नित्यज्ञानत्वादित्यादौ नाव्याप्तिसम्भवः, पटत्वादि विशिष्टनिरूपितायां ईश्वरज्ञानानुयोगिकविषयितायां साध्यतावच्छेदकघट त्वादिविशिष्टप्रतियोगिकत्वविरहात् उपदर्शितत्रित्वावच्छिन्नाभावसत्त्वेन पटत्वावच्छिन्नाभावस्यैव लक्षणघटकत्वात्; नच उक्तत्रित्वावच्छिन्ना भावविवक्षणे महाकाले घटवान्महाकालत्वादित्यादौ पटत्वाद्यवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यसम्भवेनाव्याप्त्यप्रसक्त्या कल्पान्तरानुसरणा सङ्गतिरिति वाच्यम्, तथापि महाकालः प्रमेयवान् महाकालपरिमाणादित्यादौ प्रमेयत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिककालिकसम्बन्धस्य घटत्वा द्यवच्छिन्नप्रतियोगिताकसम्बन्धानतिरिक्ततया घटत्वपटत्वाद्यवच्छिन्नाभावे

[दी] निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् ।

---

ननु स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य त्रित्वावच्छिन्नाभावप्रतियोगितया विवक्षणात् प्रमेयघटत्वावच्छिन्ननिरूपितविषयितायांच घटत्वावच्छिन्नाभावप्रतियोगितावच्छेदकघटत्वादिनानवच्छिन्नत्वात् तादृश विषयितायां उक्तत्रित्वावच्छिन्नाभावोऽक्षत एवेति वाच्यम् ;– एवंसति ईश्वरज्ञानस्य प्रमेयत्वादिसहितघटत्वावच्छिन्ननिरूपितविषयितामादायव तस्य सर्वनिर्वाहे शुद्धघटत्वाद्यवच्छिन्ननिरूपितविषयितायाः तज्ज्ञाने ऽप्रामाणिकतया शुद्धघटत्वाद्यवच्छिन्नसाध्यके नित्यज्ञानत्वादिहेतौ शुद्ध घटत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्यसत्त्वेनाव्याप्तेः, ईश्वर ज्ञानानुयोगिकविषयितासामान्ये शुद्धघटत्वावच्छिन्नप्रतियोगिकत्वविरहेण त्रित्वावच्छिन्नाभावसत्त्वात् । अस्तुवा ईश्वरज्ञानेपि शुद्ध घटत्वावच्छिन्नविषयिता , तथापि घटत्वावच्छिन्नसाध्यके प्रमे यत्वसहित घटत्वेनैव यज्ज्ञानं तद्घटं विषयीकुरुते तादृश ज्ञानमात्रवृत्तिहेतुकस्थलेऽव्याप्तेर्दुर्वारत्वात् , तद्घटविषयकेपि ज्ञाने तद्घटा नधिकरणकालावच्छेदेन तद्घटाभावस्य सत्त्वात् तादृशाभावस्य च शुद्ध घटत्वरूपप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वंतज्ज्ञानानुयोगिकविषयि तायां नास्तीति तत्रोक्तत्रित्वावच्छिन्नाभावसत्त्वेन प्रतियोगितावच्छेदकविशि-ष्टप्रतियोगिव्यधिकरणत्वात्।स्वरूपसम्बन्धेन–कालिकविशेषणतासम्बन्धेन। **निरुक्तप्रतियोग्यनधिकरणे** ति । प्रतियोगितावच्छेदकसम्बन्धेन प्रति योगितावच्छेदकावच्छिन्नानधिकरणेत्यर्थः । एवञ्च स्वावच्छिन्नत्वसाध्य तावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्मः तदवच्छिन्नसामानाधिकरण्यं तद्धर्मावच्छिन्नविधेयकानुमित्यौपयिक

व्याप्तिरिति पर्यवसितम् । घटवान्महाकालत्वादित्यादौ समवायादिना घटाद्यभावीयप्रतियोगितैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरण्यानिरूपिका प्रसिद्धा, तादृशप्रतियोगितासामान्ये कालिकसम्बन्धावच्छिन्नत्वाभावादेव निरुक्तोभयाभाववत्त्वमक्षतमिति लक्षणसमन्वयः ! धूमवान् वह्नेरित्यादौ संयोगादिना घटाद्यभावप्रतियोगितायां समवायादिना धूमाद्यभावप्रतियोगितायां च धूमत्वावच्छिन्नत्वसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावसत्त्वेपि साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकावच्छिन्नाभावप्रतियोगिताया अपि निरुक्तप्रतियोगितासामान्यान्तर्गतत्वेन तत्रोभयाभावासत्त्वान्नातिव्याप्तिः । धूमादिसमानाधिकरणस्य समवायादिना वह्न्याद्यभावस्य संयोगादिना घटाद्यभावस्य च प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वतादृशधर्मावच्छिन्नत्वयोरेकैकसत्त्वेप्येकैकाभावेन द्वित्वावच्छिन्नाभावसत्त्वाल्लक्षणसमन्वयः ।

यद्यपि तादृशाभावीयसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमात्रस्याभावनिवेशेपि सामञ्जस्यम् , इदं वाच्यं ज्ञेयत्वात् — इत्यादौ वाच्यत्वत्वावच्छिन्नभेदादिप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य विरहमादाय प्रमेयसामान्यसाध्यके संयोगेन जन्यत्वविशिष्टघटादिहेतौ साध्यतावच्छेदकावच्छिन्नभेदस्य संयोगसमवायकालिकविशेषणतासम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य च हेतुमत्यसम्भवेपि विषयितासम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य ज्ञानमात्रवृत्तिहेतौ च संयोगसम्बन्धावच्छिन्नतदवच्छिन्नाभावस्य तद्वति प्रसिद्ध्या तदीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां उक्तसम्बन्धावच्छिन्नत्वस्य विरहमादाय लक्षणसमन्वयसम्भवात् ; तथापि हेतुमति सर्वैरेव सम्बन्धैः साध्यं वर्तते नतु कस्यामपि तादृशाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व

[दी] समवायसम्बन्धेन प्रमेयसामान्याभावस्य सामान्यादौ सत्त्वात्प्रमेयत्वादेरप्यभावप्रतियोगितावच्छेदकत्वम् ।
अतएव समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्वगुणाद्यनुयोगिकत्वोभयवत्त्वेपि

---

मिति भ्रमदशायामपि अनुमितेरानुभाविकतया तदानीञ्च साध्यतावच्छेदकावच्छिन्नत्वेन तादृशाभावप्रतियोगित्वज्ञानासम्भवात्तावद्विशेषितप्रतियोगिताधर्मिकसम्बन्धविशेषावच्छिन्नत्वाभावज्ञानस्यानुमितिहेतुता न सम्भवतीत्युभयाभावानुसरणम्। वस्तुतस्तु, अभावज्ञानज्ञानत्वान्यतमवान्योगिज्ञानत्वादित्यादौ वस्त्वव्याप्तिर्बोध्या, तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीय साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वाप्रसिद्धेः । एवं निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासामान्ये निरुक्तधर्मावच्छिन्नत्वाभावनिवेशे कालो घटवानित्यादावव्याप्तेः परिहारो बोध्य इति ।

प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थले साध्यतावच्छेदकावच्छिन्नाभावाप्रसिद्ध्या तदवच्छिन्नत्वमप्यसिद्धमिति शङ्कां परिहरति— **समवाये** ति । यद्यपि विषयतादावपि तदवच्छिन्नत्वप्रसिद्धिसम्भवः, तथापि विषयितादिनिष्ठतत्प्रकारकत्वादिरूपतदवच्छेद्यतायाः प्रतियोगितानिष्ठाया अन्यूनानतिरिक्तवृत्त्यगुरुधर्मनिरूपितविलक्षणावच्छेद्यतायाश्च एकजातीयत्वस्याप्रामाणिकत्वेनातिव्याप्तिभयेन प्रतियोगितायां यादृशमवच्छिन्नत्वं तस्यैव लक्षणे निवेशः कार्य इत्यभिप्रायेण तादृशावच्छिन्नत्वस्यैव प्रसिद्धिर्दर्शिता । अन्यत्स्वयमूह्यम् ।

पूर्वकल्पे दोषान्तरमपि दर्शयति— **अत एवे** ति । पूर्वकल्पं परित्यज्य एतत्कल्पावलम्बनादेवेत्यर्थः । समवायस्योभयवत्त्वे हेतुः **एकत्वेने** ति । **उभयवत्त्वेपी** त्यनेन द्रव्यत्वाभावे हेत्वधिकरणगुणादौ

[दी] द्रव्यं जातेरित्यादौ वह्निधूमोभयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेपि च नातिव्याप्तिरिति वदन्ति ।

---

उभयाभावघटितप्रतियोगिवैयधिकरण्यासम्भवस्सूचितः। द्रव्यं जातेरित्यादाविति नातिव्याप्तिरित्यग्रिमेणान्वयः । यद्यपि प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं प्रतियोगिनिरूपिततादृशसम्बन्धाननुयोगित्वम् , अधिकरणतानिवेशे तादात्म्येन साध्यतायां व्यभिचारिण्यतिव्याप्तेः, तथाच समवायैक्यपक्षे गुणादेरपि द्रव्यत्वप्रतियोगिकसमवायानुयोगिता निष्प्रत्यूहैवेत्येतत्कल्पेपि समवायेन द्रव्यत्वाभावस्य लक्षणघटकत्वानिर्वाहः; तथापि स्वप्रतियोगिप्रतियोगिकत्वविशिष्टतादृशसम्बन्धनिरूपितविलक्षणानुयोगिताया एव निवेशनीयतया गुणादिनिष्ठसमवायानुयोगितायाश्च द्रव्यत्वीयत्वविशिष्टानिरूपितत्वेन न दोषः । वस्तुतः प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यवच्छिन्नभेदो हेतुमद्विशेषणम् , एवञ्च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वविशिष्टसम्बन्धाननुयोगिन्येव भेदाभ्युपगमात् समवायैक्यमतेपि समवायेन द्रव्यत्वाद्यवच्छिन्नभेदस्य गुणादावक्षतत्वात्, द्रव्यत्वाद्यभावस्य गुणादौ समवायेन प्रतियोगिवैयधिकरण्यमव्याहतमेवेति । इदमत्रावधेयम् ; समवायकालिकविशेषणताद्युभयसम्बन्धेन यत्र द्रव्यत्वादेः साध्यताकेवलसमवायादिना द्रव्यत्वादेर्हेतुता तत्र साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतगगनानुयोगिकसमवायादौ उक्तोभयाभावासत्त्वेनातिव्याप्तिस्समवायभेदमतेपि दुर्वारा, साध्यतावच्छेदकसम्बन्धतावच्छेदकरूपविशिष्टनिरूपितानुयोगितासामान्ये निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धनिरूपितत्वहेत्वाधिकरणीभूतयत्किंचिद्व्यक्तिनिष्ठत्वोभयाभावविवक्षणेन तादृशदोषवारणे च निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धनिरूपितत्वस्थाने निरुक्तप्रतियोगिप्रतियोगिकत्वविशिष्टसम्बन्धनिरूपितत्वनिवेशेन द्रव्यं जातेरित्यादावतिव्याप्तिः शक्यते वारयितुमित्युक्तमिति ।

इदं त्ववधेयम्, स्वसमवायिसंयोगादिसम्बन्धेन यत्र लौहित्यादेः साध्यता तत्र सद्धेतावेतत्स्फाटिकत्वादावुभयाभावघटितप्रतियोगिवैयधिकरण्य निवेशपक्षे स्फटिकाद्यनुयोगिकजपादिसंयोगे लौहित्यादिनिरूपितपरम्परासम्बन्धघटके साक्षाल्लौहित्यप्रतियोगिकत्वाभावेन हेतुमन्निष्ठसाध्याभावे प्रतियोगि वैयधिकरण्यं दुर्वारम्, साक्षात्परम्परासम्बन्धघटकसाधारणं तत्प्रतियोगिप्रति योगिकत्वं चानुगतं दुर्वचम्, तादृशस्य तस्य निवेशे अयोगोलका नुयोगिकवह्निसंयोगादेरपि धूमादेः परम्परासम्बन्धघटकत्वसम्भवेन धूमादि प्रतियोगिकतया तन्निष्ठधूमाद्यभावेपि प्रतियोगिवैयधिकरण्यानुपपत्तेः, नच तादृशसंयोगे संयोगत्वपुरस्कारेण साक्षाल्लौहित्यप्रतियोगिकत्वविरहेपि साध्यतावच्छेदकसम्बन्धतावच्छेदकस्वसमवायिसंयोगत्वपुरस्कारेण तत्प्रति योगिकत्वं स्वीक्रियत इति वाच्यम्, मानाभावात्, समवायस्य तत्प्रति योगितयैव तद्घटितपरम्परायास्सम्बन्धतोपपत्तेः, किंचिद्रूपेणापि संयोगादेर्लौहित्यप्रतियोगिकत्वे संयोगादिना किंचित्समवायिनिरूपितत्व विशिष्टसंयोगादिना वा साक्षात्सम्बन्धात्मकेन स्फटिकादौ लौहित्यादि बुद्धेर्भ्रमत्वानुपपत्तेश्च, यादृशसम्बन्धे यत्प्रकारप्रतियोगिकत्वयद्विशेष्यानुयोगिकत्वोभयाभावस्तादृशसम्बन्धेन तत्प्रकारकतद्विशेष्यकज्ञानान्य ज्ञानस्यैव प्रमात्वात्, स्वसमवायिसंयोगे चोभयसत्त्वेनोभयाभावासत्त्वात्; नच सम्बन्धभेदेन व्यापकताभेदास्त्वसमवायिसंयोगरूपपरम्परासम्बन्धेन यत्र साध्यता तत्र परम्पराघटकविशेष्यांशे स्वप्रतियोगिप्रतियोगिकत्व मुपेक्ष्य स्वप्रतियोगिप्रतियोगिकपरम्पराघटकविशेषणसमवायादिमत्प्रतियोगि कत्वस्यैवाभावो निवेशनीयः, परम्पराभिवृद्धावपि ईदृशरीत्योह्यमिति नानु पपत्तिरिति वाच्यम्;— यत्र कालिकसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन घटादिकं साध्यं महाकालवृत्तित्वादिकं हेतुः तत्र कालिकसम्बन्धेन गगनादेरवृत्तित्वपक्षे प्रतियोगिव्यधिकरणाभावाप्रसिद्धेर्दुर्वारत्वात्; गगनादिनिरूपितस्य तादृशसामानाधिकरण्यरूपपरम्परासम्बन्धघटकविशेषणस्यकालिकसम्बन्धस्या

प्रसिद्धेः, विशेषणीभूतसम्बन्धं विशिष्यानिवेश्य निरुक्तप्रतियोगिप्रतियोगिक सम्बन्धत्वेन सम्बन्धं निवेश्य तद्वत्प्रतियोगिकत्वनिवेशे कालिकविशेषणतावत्सम वेतत्वरूपपरम्परासम्बन्धेन द्रव्यत्वादिसाध्यके द्रव्यवृत्तित्वादिहेतावतिव्याप्तिः, तत्र साध्यतावच्छेदकपरम्परासम्बन्धघटकविशेष्यीभूतसमवेतत्वांशे व्यभिचार निरूपकाधिकरणशब्दज्ञानाद्यनुयोगिकत्वद्रव्यत्वप्रतियोगिकसम्बन्धत्वावच्छि न्नद्रव्यत्वसमवायवत्प्रतियोगिकत्वोभयसत्त्वेन द्रव्यत्वाभावासङ्ग्रहात् । हेत्वधि करणानुयोगिकविशेष्यीभूतसम्बन्धप्रतियोग्यनुयोगिकत्वनिरुक्तप्रतियोगिप्रति-योगिकत्वोभयाभावस्य परम्परासम्बन्धघटकविशेषणांशे निवेशे स्वसमवायि समवेतत्वसम्बन्धेन जातिसाध्यकमेयत्वादिहेतावतिव्याप्तिः, तत्र तादृशसम्ब न्धघटकविशेषणांशे तादृशसम्बन्धेन साध्याधिकरणहेत्वधिकरणव्यक्त्यनु-योगिकविशेष्यीभूतसम्बन्धप्रतियोग्यनुयोगिकत्वघटितोभयसत्त्वात्, व्यभि चारनिरूपकीभूतहेत्वधिकरणानुयोगिकविशेष्यीभूतसम्बन्धाप्रसिद्धेः साध्या भावस्य लक्षणाघटकत्वेनाभावान्तरस्यैव लक्षणघटकत्वात्; नच पर म्परासम्बन्धघटकविशेष्यांशे हेत्वधिकरणानुयोगिकत्वपरम्परासम्बन्धघटक-विशेषणीभूतसम्बन्धवन्निरूपितत्वनिरुक्तप्रतियोगिप्रतियोगिकसम्बन्धवन्निरू-पितत्वानां त्रयाणामभावविशेषणान्न दोषः, गगनादिनिरूपितका-लिकसम्बन्धाप्रसिद्धावपि तन्निरूपिततादात्म्यविषयतादिसम्बन्धवन्निरूपि-तत्वप्रसिद्ध्या त्रित्वावच्छिन्नाभावसौलभ्यादिति वाच्यम्, — कालिक स्वरूपोभयसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन जन्यज्ञानादेः सा-ध्यत्वे व्यभिचारिणि कालवृत्तित्वादावतिव्याप्त्यापत्तेः, व्यभिचारानिरू-पकाधिकरणप्रळयत्वादिनिष्ठायामुक्तसम्बन्धघटकाधेयतायां कालिकसम्ब-न्धवन्निरूपितत्वसाध्यीयविषयतासम्बन्धवन्निरूपितत्वयोस्सत्त्वेनाधेयतासा-मान्ये दर्शितात्रित्वावच्छिन्नाभावासत्त्वेन साध्याभावस्य प्रतियोगिवैयधि करण्यानिर्वाहात् । प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे च नेयमनु पपत्तिः, हेत्वधिकरणस्फटिकादिनिष्ठस्य समवायादिना प्रतियोगिव्यधि

करणस्याभावस्य समवायादिसम्बन्धावच्छिन्नप्रतियोगितायां स्वसमवायि संयोगादिरूपपरम्परायाः अवच्छेदकत्वाभावेनोभयाभावाक्षतेः । नच स्वसम वायिसमवायादिसम्बन्धेन घटरूपादिसाध्यके समवायादिना घटादि हेतावव्याप्तिः, तत्र किंचित्समवायिनिरूपितत्वविशिष्टस्वसमवायादिसम्ब-न्धावच्छिन्नायां हेतुमत्कपालादिनिष्ठसाध्याभावप्रतियोगितायां समवायि समवायरूपसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वसत्त्वात्, नहि तत्र दर्शित प्रतियोगितावच्छेदकसम्बन्धसाध्यतावच्छेदकसम्बन्धयोः शरीरवैलक्षण्यं किमपि शक्यते वक्तुम्, स्वांशस्य सम्बन्धाप्रवेशादितरांशस्याविशे षात्; इयांस्तु विशेषः, दर्शितसाध्यतावच्छेदकसम्बन्धस्य सम्बन्धतया भाने प्रथमसमवायविषयताप्रकारतानिरूपिता, द्वितीयसमवायविषयता विशेष्यता निरूपिता, उक्तप्रतियोगितावच्छेदकसम्बन्धस्य सम्बन्धतया भाने द्वितीयसमवायविषयतैव प्रकारताविशेष्यतोभयनिरूपितेति, स चानुप युक्त एवेति वाच्यम्,– परम्परासम्बन्धावच्छिन्नाभावस्य हि प्रतियोगिता वच्छेदकसम्बन्धता परम्पराघटकयावद्वस्तुषु विशेष्यविशेषणभावापन्नेषु पर्याप्ता, विशिष्टसाक्षात्सम्बन्धावच्छिन्नाभावस्य तु तादृशसम्बन्धता विशेष्य एव पर्याप्ता, विशेषणं तु सम्बन्धविधया अवच्छेदकतायामवच्छेदक मेव, नतु तदन्तर्भावेन सम्बन्धविधया प्रतियोगितावच्छेदकत्वस्य पर्याप्तिः, ईदृशरीत्यैवाभाववैलक्षण्यनिर्वाहात्, तथाच परम्परासम्बन्धेन यत्र सा ध्यता तत्र परम्परापर्याप्तावच्छेदकताकत्वरूपं साध्यतावच्छेदकसम्बन्धा वच्छिन्नत्वं निवेशनीयम्, उक्तस्थले चाधिकरणविशेषणीभूतसमवायस्य प्रतियोगितावच्छेदकतायामेवावच्छेदकतया प्रतियोगितायां तदन्तर्भावेन पर्याप्तावच्छेदकताकत्वाभावादिति दिक् । *

---

* ननु प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे विषयितादिवृत्त्यनियाम कसम्बन्धेन साध्यतायां सद्धेतावव्याप्तिः, तादृशसम्बन्धस्य वृत्त्यनियामकतया.

**संयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेपि वह्निधूमोभयवान् वह्नेरित्यादौ** नातिव्याप्तिरिति योजना । अयम्भावः, प्रत्येकसंयोगस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेण वह्निधूमोभयवान् धूमादित्यत्र संयोग सम्बन्धसामान्ये वह्निधूमोभयत्वावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणानुयोगिकत्वोभयाभावसत्वात् तादृशोभयत्वावच्छिन्नाभावोपि संयोगेन प्रति

---

अभावप्रतियोगितायामनवच्छेदकत्वेन तत्सम्बन्धावच्छिन्नत्वस्याप्रसिद्धेः; नच तादृशसम्बन्धस्य प्रतियोगितानवच्छेदकत्वेपि प्रतियोगितावच्छेदकतायामेव तत्सम्बन्धावच्छिन्नत्वप्रसिद्धिः, प्रतियोगित्वतदवच्छेदकत्वनिष्ठावच्छिन्नत्वयोः भिन्नत्वेप्येकजातीयतया तादृशानुगतरूपेणैव निवेशात्, इति वाच्यम्, तथासति तादृशसम्बन्धेन साध्यतायां व्यभिचारिण्यति व्याप्तेः, प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयान्यसम्बन्धावच्छिन्नप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वाभावेन तत्सम्बन्धावच्छिन्नप्रतियोगित्वस्य चाप्रसिद्धत्वेन तादृशप्रतियोगितासामान्ये उभयाभावसत्त्वादिति चेत्? मैवम्—प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकानाधिकरणहेतुमान्निष्ठाभावप्रतियोगितावच्छेदकतासामान्ये उभयाभावस्य विवक्षितत्वात् । विषयितादिसम्बन्धेन साध्यतायां सद्धेतौ तत्सम्बन्धावच्छिन्नावच्छेदकताकाभावोपि न प्रतियोगितावच्छेदकताघटकतत्सम्बन्धेन प्रतियोगितावच्छेदकानधिकरणहेत्वधिकरणकः, व्यभिचारिणि तादृशाभावोपि तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयसत्त्वेन नातिव्याप्तिः । वह्निमान् धूमादित्यादौ संयोगादिना घटादिमदभावः समवायादिना वह्निमदभावश्च लक्षणघटकः तत्प्रतियोगितावच्छेदकतायां चोभयाभावसत्त्वाल्लक्षणसमन्वयः । धूमवान् वह्नेरित्यादौ तु साध्यतावच्छेदकसम्बन्धेन साध्यवतोऽभावोपि तादृश इति तत्प्रतियोगितावच्छेदकतायामुभयस्यैव सत्त्वान्नातिव्याप्तिः । अन्यत्सर्वं स्वयमूह्यम् । (इति पाठान्तरम् ।)

योगितावच्छेदकावच्छिन्नत्वघटितलक्षणघटक इत्यव्याप्तिस्स्यात्, अत संयोगेनोभयसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नत्वं परित्यज्य प्रतियोगिताश्रयप्रतियोगिकत्वमेव निवेशनीयम्, तथाच वह्निधूमोभयवान् वह्नेरित्यादावपि वह्निधूमोभयत्वाद्यवच्छिन्नाभावस्य लक्षणाघटकतया पूर्वकल्पेऽतिव्याप्तिस्स्यादिति ।

अथ साध्यतावच्छेदकादिभेदेन चेद्व्याप्तिपदार्थभेदः तदैव प्रतियोगितावच्छेदकावच्छिन्नत्वपरित्यागः स्थलविशेषे सम्भवति, तथा च साधनभेदेनापि तुल्ययुक्त्या तद्भेदाद्धूमरूपहेतुकवह्निधूमोभयात्मकसाध्यघटितव्याप्तिपदार्थप्रसिद्धिनिर्वाहाय तच्छरीरे प्रतियोगिताश्रयवैयधिकरण्यनिवेशनस्य वह्निहेतुकतदुभयसाध्यकस्थले कथमतिव्याप्तिप्रसञ्जकत्वमिति चेत्? यथा संयोगसामान्ये द्वित्वावच्छिन्नप्रतियोगिकत्वाभावनिश्चयदशायामपि धूमेन वह्निधूमोभयानुमितिर्भवतीति प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकं ज्ञानं धूमलिंगकतादृशोभयानुमितिजनकमङ्गीक्रियते तथा तादृशनिश्चयदशायां सकलवह्निमतामेव धूमवत्त्वमिति भ्रान्तानां वह्निहेतुकतदुभयानुमितिरप्यनुभवसिद्धेति तत्रापि प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयज्ञानमेवानुमितिजनकं वाच्यम्, तथाच तद्धेतुकतत्साध्यकानुमितिजनकज्ञानस्य प्रमात्वप्रसङ्ग इत्येवातिव्याप्त्यर्थः; एवं यथा वह्निधूमोभयत्वेनोभयं धूमव्यापकमिति वाक्याद्यथोक्तनिश्चयदशायां शाब्दबोधो जायते तथा वह्निधूमोभयत्वेनोभयं वह्निव्यापकमिति अनाप्तोक्तवाक्यादपि योग्यताभ्रमाच्छाब्दबोधः सर्वजनानुभवसिद्ध इति प्रतियोगिताश्रयप्रतियोगिकत्वमेव तत्र शाब्दधीविषयः स्वीकरणीयः, तथाच तद्विषयकधियः प्रमात्वेन तादृशवाक्यस्य प्रमाणतापत्तिरित्यपीति । वह्नेरित्यत्र धूमादिति । नातिव्याप्तिरित्यनन्तरं अव्याप्तिर्वेति पाठं केचित्कल्पयन्ति, यथासंख्येन च स्थलद्वये ऽतिव्याप्त्यव्याप्ती योजयन्ति ।

इदमत्रावधेयम् ; घटद्वयवद्भूतलमित्यादौ द्वित्वोपलक्षितघटादि वैशिष्ट्यं तद्विशिष्टवैशिष्ट्यं वा भासते? आद्ये एकघटादिमत्यपि तत्प्रसङ्गः; नच द्वित्वोपलक्षितस्यापि व्यक्तिद्वयस्यैव वैशिष्ट्यद्वयं तत्र भासत इति नातिप्रसङ्ग इति वाच्यम्, एकस्मिन्नपि धर्मिणि भेद भ्रमेण द्वित्वभ्रमात् तत्प्रकारकप्रतीतौ उभयभानानियमात् ; तादृशबुद्धे द्वित्वविशिष्टाभावज्ञानविरोधितानुपपत्तिश्च, विशिष्टवैशिष्ट्यज्ञानस्यैव विशिष्टाभावबुद्धिविरोधित्वात् ; द्वितीये संयोगसंसर्गकतादृशज्ञानमात्रस्यैव भ्रमत्वापत्तिः, संयोगरूपवैशिष्ट्ये द्वित्वविशिष्टप्रतियोगिकत्वस्य बाधात्; तस्मात् द्वित्वादिविशिष्टप्रतीतौ संयोगमात्रं न सम्बन्धः, अपितु द्वित्वावच्छिन्न निरूपिता संयोगावच्छिन्नाधिकरणतैव, अधिकरणता च पदार्थान्तरं अधिकरणस्वरूपं वा, उभयथैव निरूपकभेदेपि निरूपकतावच्छेदकद्वित्व स्यैक्यात् तदैक्येन संयोगप्रतियोगितावच्छेदकत्ववत् तत्प्रतियोगितावच्छेदकताया द्वित्वेऽनुपपत्तिरित्युपेयम्, एवञ्च वह्निधूमोभयत्वावच्छिन्नसाध्यके संयोगावच्छिन्नाधिकरणताया एव साध्यतावच्छेदकसम्बन्धत्वात् तत्र चोभयत्वावच्छिन्नप्रतियोगिताकत्वसत्त्वान्नातिव्याप्तिप्रसक्तिः ; अन्यथा द्वितीयकल्पेपि प्रतियोगितावच्छेदकावच्छिन्ननिरूपितप्रतियोगितावच्छेदक सम्बन्धाननुयोगिकत्वानिवेशात् उभयत्वावच्छिन्नप्रतियोगिकसंयोगाप्रसिद्ध्या संयोगेनोभयत्वाद्यवच्छिन्नसाध्यके व्यभिचारिणि तत्सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वेनातिव्याप्तेर्वज्रलेपत्वात् ।

वस्तुतस्तु पर्वतो वह्निमानित्यादावपि संयोगावच्छिन्नाधिकरण तैव सम्बन्धो नतु संयोगमात्रम्, अन्यथा पर्वतो वह्निमानित्यत्रेव पर्वते वह्निरित्यत्रापि संयोगमात्रस्यैव तथात्वापत्त्या अविशेषप्रसङ्गात ; तादृशप्रतीत्योर्विशेषाय प्रथमायां संयोगो द्वितीयायां तदवच्छिन्नाधेयता संसर्ग इत्युपेयते किंवा प्रथमायां संयोगावच्छिन्नाधिकरणता द्विती

याधां संयोगः तथेत्यत्र विनिगमकस्य दुर्लभत्वात्; नच तादृश प्रतीत्योस्संसर्गांशेऽविलक्षणत्वेपि विशेष्यविशेषणभावभेदाद्वैलक्षण्योपपत्ति सम्भव इत्युभयत्रैव संयोगमात्रस्य सम्बन्धतास्त्विति वाच्यम्,-तावता पर्वतो वह्निमान् वह्नौ पर्वत इत्यनयोः पर्वते वह्निः पर्वतवान् वह्निरित्यनयोश्च प्रतीत्योर्वैलक्षण्यानिर्वाहात्! नचैवं रूपवानित्यादावपि समवायावच्छिन्नाधारतैव सम्बन्धस्स्यात्, नतु समवायः, उक्तयुक्तेरविशेषादिति वाच्यम्;— समवायातिरिक्तसमवायावच्छिन्नाधारतानभ्युपगमात् ।

अथ समवायावच्छिन्नाधारतायाः समवायरूपत्वे समवायावच्छिन्नाधेयताऽवश्यमतिरिक्ता स्वीकरणीया, अन्यथा रूपवान् घटः घटे रूपमिति प्रतीत्योः संसर्गवैलक्षण्यानुपपत्तेः, तथाच समवायावच्छिन्नाधेयता आधारता वा अतिरिक्तेत्यत्र विनिगमकं दुर्लभमिति समवायातिरिक्ताधारतासिद्धिर्निष्प्रत्यूहैवेति चेन्न ;— घटानुयोगिकरूपप्रतियोगिकसम्बन्धो रूपानुयोगिकघटप्रतियोगिकसम्बन्धश्च परस्परं विलक्षण एव, अन्यथा दर्शितस्थले संसर्गवैलक्षण्यानिर्वाहादिति सत्यम्, तत्र चाधारानुयोगिकः सम्बन्ध एव समवाय इति परिभाषितः, नत्वाधेयानुयोगिकः, सत्वाधेयतेत्येव परिभाष्यते, तत्र को विनिगमकानुयोगः? * एकानुयोगिकसंयोगद्वयप्रतियोगितयोः प्रत्येकमुभयत्वावच्छिन्नत्व

---

*[अधिकपाठः]— नचैवं संयोगिन्यपि संयोग एवाधारतास्तु, सचानुयोगितासम्बन्धेनाधारपदप्रवृत्तिनिमित्तमिति संयोगस्य द्विष्ठत्वेपि नाधेये तद्व्यवहार इति वाच्यम्, संयोगीयसमवायातिरिक्ताया आधेयत्वव्याप्तानुयोगितायाः स्वीकारे तस्या एव संयोगिनिरूपिताधारतात्वोपगमेनातिरिक्ताधारताया निष्प्रत्यूहत्वात्; नच तत्र संयोगिप्रतियोगिकत्वं कल्पनीयमिति गौरवम्, भवन्मतेपि संयोगे तत्समवेतत्वातिरिक्तस्य त—

विरहेऽपि तदुभयत्वेनोभयत्वावच्छिन्नत्वोपगमान्न संयोगेनोभयसाध्यके ऽति-व्याप्तिरित्याहुः ।

प्रतियोगित्वावच्छेदकत्वादेः स्वरूपसम्बन्धरूपतया सम्बन्धत्वेन तन्निर्देशे सम्बन्धत्वस्य नियमघटिततया अनवस्थेत्याशङ्कां निर-

---

स्प्रातियोगिकत्वस्य कल्पनीयतया साम्यात्, अन्यथा भूतलादेः स्वस मवेतघटादिसंयोगानुयोगितया स्वाधारतापत्तेः । एतेन संयोगस्याधेय तापि संयोग एव, प्रतियोगितासम्बन्धेन तस्याधेयपदप्रवृत्तिनिमित्ततया नाधारे तद्व्यवहार इत्यपि निरस्तम्; आधेयनिष्ठाधारव्यावृत्तपदार्थान्तर कल्पनाया आवश्यकत्वात्, आधाराधेययोः संयोगानुयोगित्वप्रतियोगि-कत्वकल्पने विपरीतकल्पनायामपि बाधकाभावाच्चेति दिक् ।

* [अधिकपाठान्तरम् । ] नचैवं संयोगिन्यपि संयोग एवाधारतास्तु, स चानुयोगितासम्बन्धेनाधारपदप्रवृत्तिनिमित्तमिति समवायवत्संयोगस्यापि सम्बन्धत्वं दुर्वारम्, सचानुयोगिन्येव धर्मस्य विशिष्टबुद्धिनियामकः,अतस्सं-योगसंसर्गकस्य घटो भूतलवानित्यादिबुद्धेर्न प्रमात्वम्;भूतले घट इत्यादिबुद्धौ च स्वविशिष्टसंयोगप्रतियोगिकत्वं धर्मे धर्मिसंसर्गतया भासते इति वाच्यम्;-संयोगो धर्म एव धर्मिणस्संसर्गः, धर्म एव तदनुयोगित्वम्, धर्मिणि तत्प्रति योगित्वमेवेति भूतले घट इत्यादावेव संयोगस्य सम्बन्धतया भानम्, घटवद्भूतलमित्यादौ तु स्वनिष्ठसंयोगप्रतियोगित्वं धर्मिणि धर्मसम्बन्ध इत्यस्यापि सुवचत्वेन विनिगमनाविरहात् । तस्मात्संयोगेन धर्मत्व धर्मित्वयोरेव धर्मधर्मिसम्बन्धता, तयोश्च संयोगावच्छिन्नत्वेन सम्बन्धा न्तरेण धर्मधर्मिभानाद्वैलक्षण्यं गुरुमते, समवेतसमवायिनोरपि धर्मधर्मि भाव एव विशिष्टधीविषयः, तन्मतेऽतीन्द्रियतया समवाय एव न तथेति मिश्राः । समवायस्य धर्मिमात्रनिष्ठतया तस्य धर्मिस्वरूपत्वसम्भवेन अतीन्द्रियसमवायस्यातिरिक्तस्य कल्पने गौरवं बोध्यमिति दिक् ।

[दी] प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषः, न सम्बन्धत्वेन निविष्टः। सामानाधिकरण्येऽपि सम्बन्धस्संयोगत्वादिनैव निविशते। दर्शितश्च नियमाघटितमपि सम्बन्धत्वम्।

---

स्यति – **प्रतियोगित्वादिश्चे** ति। सम्बन्धविशेषोपि न सम्बन्धत्वेन लक्षणघटकः अपितु प्रतियोगितात्वादिना कुलचित्सम्बन्धविधया स्वरूपत एवेत्यर्थः। ननु सामानाधिकरण्यं तत्सम्बन्धिसम्बन्धित्वं तत्रच सम्बन्धत्वेनैव सम्बन्धनिवेश इत्याशङ्क्याह– **सामानाधिकरण्येपी** ति। **संयोगत्वादिनैवे** ति। साधनतावच्छेदकादिभेदेनेव सम्बन्धादिभेदेनापि व्याप्तिभेदस्येष्टत्वादिति भावः। साध्यसामानाधिकरण्यशरीरे साध्यवत्संयुक्तत्वादिरूपे हेतोः सम्बन्धस्य प्रकारतया तस्यैव संयोगत्वादिना निवेशः, साध्यसम्बन्धस्य च धर्म्यंशे तत्संसर्गविधयैव लाघवेन निवेशात् तस्य स्वरूपत एव निवेशः सम्भवति, जात्यतिरिक्तस्यापि संसर्गतयाभाने स्वरूपतोपि तदुपगमादित्यवधेयम्। सम्बन्धत्वनिवेशेपि च न क्षतिरित्याह— **दर्शितश्चे** ति। **नियमाघटित** मिति। तत्प्रतियोगिकत्वविशेष एव तदीयसम्बन्धत्वं नतु तद्विशिष्टबुद्धिनियामकत्वम्, अतीन्द्रियसम्बन्धे जनकत्वरूपनियामकत्वासम्भवात्, तत्प्रतीतिविषयत्वरूपनियामकत्वनिवेशे व्याप्तेरेवानन्तर्भावात्प्रमेयमात्रेऽतिप्रसङ्गाच्च; नच विशेष्यतान्यतत्प्रकारतानिरूपितविषयताया विवक्षणीयतया नातिप्रसङ्ग इति वाच्यम्, एवमपि संयोगादिना द्रव्यत्वादिभ्रमविषयतामादाय तस्यापि तत्सम्बन्धत्वापातात; नच विषयतायां प्रमाप्रतियोगिकत्वनिवेशान्नायमतिप्रसङ्ग इति वाच्यम्, प्रमात्वस्य तत्सम्बन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपतया सम्बन्धत्वघटितत्वात्; एवं तदनुयोगिकत्वविशेष एव तत्र सम्बन्धत्वमिति भावः। इत्थञ्च सामान्यतस्सम्बन्धघटितं साध्यव-

[दी] अभावत्वं च इदमिह नास्तीदमिदं न भवतीति प्रतीतिनियामको भावाभावसाधारणस्स्वरूपसम्बन्धविशेषः, अतो नाभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः ।

---

त्सम्बद्धत्वरूपसाध्यसामानाधिकरण्यं साध्यवदनुयोगिकप्रतियोगित्वं प्रतियोगितासम्बन्धेन साध्यवदनुयोगिकवत्त्वं वा, तच्च संयोगत्वादिना तद्घटितात्साध्यवदनुयोगिकसंयोगप्रतियोगित्वादिरूपाल्लघुशरीरमिति तदेव व्याप्तिघटकं वाच्यम्, अतिप्रसङ्गस्य व्यापकतायां विशिष्यसम्बन्धनिवेशेनैव वारणसम्भवात् । हेतौ साध्यवदसंयुक्तत्वादिनिश्चयदशायां संयोगादिना पक्षे हेतुमत्तानिश्चयस्य साक्षादनुमितिप्रतिबन्धकताया अग्रे वक्तव्यतया तत्रानुमित्यापत्त्यनवकाशादिति सूचितम् । अभावत्वं चेदत्र भावभिन्नत्वं तदा प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्व तादृशसम्बन्धावच्छिन्नत्वोभयाभावनिवेशपक्षे दैशिकविशेषणतया घटत्वाभावादिसाध्यके व्यभिचारिण्यतिप्रसङ्गः, तादृशसम्बन्धावच्छिन्नतदभावस्य घटत्वादिरूपतया भावभिन्ननिरूपितप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्व घटत्वाभावत्वावच्छिन्नत्वोभयाभावस्याक्षतत्वादित्याशङ्कां निरस्यति— **अभावत्वं चे** ति । **इदमिह नास्ति इदमिदं न भवती** ति । द्विविध प्रतीतिकथनेनाभावत्वस्य संसर्गाभावान्योन्याभावोभयसाधारण्ये प्रमाणमुपदर्शितम् । तस्यान्योन्याभावसाधारण्यविरहेऽत्यन्ताभावान्तरप्रतियोगितासामान्ये तादात्म्यसम्बन्धावच्छिन्नत्वविरहेण तेन सम्बन्धेन साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् । **भावाभावसाधारण** इति । भावेनापि घटे घटत्वाभावो नास्ति घटो न घटभिन्न इति प्रतीतेर्जननादिति भावः । तदवच्छिन्ने चाभावपदस्य रूढिशक्तिः परिभाषैव वा, अतो न भावोऽभाव इत्यर्थव्युत्पत्त्या तद्धर्माप्रत्ययेऽपि न क्षतिः । **स्वरूपसम्बन्धविशेष** इति ।

अभावे तत्स्वरूपप्रतियोगितानिरूपितानुयोगित्वनामा सम्बन्धविशेष इत्यर्थः । न चाभावत्वस्य स्वरूपसम्बन्धरूपत्वेऽननुगमादनुगतप्रत्ययानुपपत्तिः, तदनुगमकरूपान्तराभ्युपगमात् , पदार्थान्तरत्वेपि निरूपकभेदेन सम्बन्धान्तरवत्तद्भेदस्यावश्यकतया अनुगमकरूपान्तरापेक्षणात् । यत्तु प्रतियोगिनिरूपितसम्बन्धानामननुगमेपि प्रतियोगिधर्मितावच्छेदकस्य नञ्पदप्रवृत्तिनिमित्ताखण्डधर्मान्तरस्य सत्त्वात् पटो नास्ति घटो नास्तीत्याद्यनुगतप्रमितिनिर्वाह इति ; तन्न साधीयः, घटादौ घटाभावादेः कालिकादिसम्बन्धस्यापि स्वरूपतया तत्संसर्गकप्रतीतितो घटाभावो नास्तीत्याद्यनुयोगितासंसर्गकप्रतीतेर्वैलक्षण्याय संसर्गतावैलक्षण्यावश्यकतया संसर्गतावच्छेदकधर्मविशेषस्वीकारस्य तन्निर्वाहकस्यावश्यकत्वात्तेनानुगतीकृतानुयोगिताया एव संसर्गतावद्धर्मितावच्छेदकताया अपि सम्भवेनाभावनिष्ठाखण्डधर्मान्तरे मानाभावात् , नञ्पदप्रवृत्तिनिमित्तताया अपि तस्यामेवोपगमात् ।

अथ नास्तीत्यादावनुयोगितारूपसम्बन्धविशेषप्रकारेण भावभानोपगमे तदंश एव स्वनिरूपितत्वसम्बन्धेन प्रतियोगिनः प्रकारत्वसम्भवादभावांशे तत्सम्बन्धेन प्रतियोगिनो भाने मानाभावादनुयोगितायाः सम्बन्धत्वमेव न सिद्ध्येदिति चेन्न ;— मण्याद्यभावस्य दाहादिहेतुतायां मण्यादिरूपप्रतियोग्यवच्छिन्नानुयोगिताविशेषस्यावच्छेदकत्वापेक्षया अनुयोगितासम्बन्धेन मण्यादेस्तथात्वे लाघवेन तत्सम्बन्धतासिद्धेः । नचोभयाभावादिवारणाय मणित्वाद्यवच्छिन्ननिरूपितानुयोगिता मण्यादेः सम्बन्धो वाच्यः, तथाच तादृशानुयोगितायाः स्वाश्रयतासम्बन्धेनावच्छेदकत्वेपि गौरवमिति वाच्यम् , उभयत्वाद्यवच्छिन्ननिरूपितानुयोगिताया मणित्वादिविशिष्टसम्बन्धताविरहात् , शुद्धानुयोगितासम्बन्धेनैव मणित्वादिविशिष्टस्योभयत्वावच्छिन्नाभावव्यावर्त्तकतासम्भवेन तादृशानु-

[दी] तदपि वा नोपादेयम्, प्रयोजनविरहात् । विषयतातत्त्वादिवत्प्रतियोगित्वाधिकरणत्वतत्त्वसम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः ।

इति दीधितौ सिद्धान्तलक्षणम् ।

———(*)———

योगितात्वेन सम्बन्धतानुपगमात् । नच तादृशस्य विशिष्टमणित्वाद्यवच्छिन्नाभावव्यावर्तकता न सम्भवति, विशिष्टमणित्वाद्यवच्छिन्ननिरूपितानुयोगितायामप्यधिकं त्वित्यादिन्यायेन मणित्वादिविशिष्टनिरूपितत्व सत्त्वेन तस्या अपि तत्सम्बन्धत्वादिति वाच्यम्,— कारणतावच्छेदकता पर्याप्त्यधिकरणपरिसमाप्तप्रतियोगिताकसम्बन्धिन एव कारणतया मणिर्नास्तीत्याकारकशुद्धमणित्वाद्यवच्छिन्नप्रकारकप्रतीत्यविषयविशेषणान्तरसहितमणित्वाद्यवच्छिन्नाभावनिष्ठतादृशमणित्वाद्यवच्छिन्ननिरूपितसम्बन्धे च शुद्धमणित्वादिविशिष्टपरिसमाप्तप्रतियोगिताकत्वविरहेण तादृशाभावव्यावर्तनसम्भवात् । एतेन विशिष्टमणित्वाद्यवच्छिन्नाभाववारणाय शुद्धमणित्वाद्यवच्छिन्नप्रतियोगिताकत्वेन हेतुता वाच्या, शुद्धमणित्वाद्यवच्छिन्नत्वञ्च मणित्वाद्यन्यधर्मानवच्छिन्नत्वम्, तदपि यदि तादृशधर्मावच्छेद्यत्वत्वावच्छिन्नाभावस्तदा किंचिद्विशिष्टतादृशावच्छेद्यत्वत्वावच्छिन्नाभावमादायातिप्रसङ्ग इति शुद्धतादृशधर्मावच्छेद्यत्वत्वावच्छिन्नाभाव एव निवेशनीयः, शुद्धतादृशावच्छेद्यत्वत्वाद्यवच्छेद्यत्वमपि तदतिरिक्तानवच्छिन्नत्वमिति विशेषणानवस्थाप्रसङ्ग इत्यपि निरस्तम् । इत्यलमप्रस्तुताधिकजल्पनया ।

तदपि—तादृशाभावत्वमपि । **नोपादेयम्**— हेतुसामानाधिकरण्यांशे विशेषणतया न निवेशनीयम् । **प्रयोजनविरहा** दिति । स्वावच्छेदकविशिष्टानधिकरणहेतुमन्निष्ठत्वमात्रपुरस्कारेणाभावं निवेश्य तदीयत्वेन प्रतियोगितानिवेशादेव सर्वसामञ्जस्यादिति भावः । प्रसङ्गात्प्रतियोगित्वादीनामपि पदार्थान्तरत्वं व्यवस्थापयति— **विषयते** ति । **तत्त्वम्**—

विषयतात्वम् । प्राचीनैकदेशिभिर्विषयताया अतिरिक्तपदार्थत्वोपगमात् दृष्टान्तत्वेन तदुपन्यासः । यथा विषयतायाः विषयरूपत्वे द्रव्यत्वावच्छिन्नघटविषयकज्ञानाद्घटत्वावच्छिन्नतद्विषयकज्ञानस्य विषयतावैलक्षण्य विरहाद्वैलक्षण्यापत्तिः; नच द्रव्यत्वघटत्वयोरपि तत्र विषयतया तद्वैलक्षण्यादेव वैलक्षण्यमिति वाच्यम्, तावतापि द्रव्यत्वेन घटविषयकाद्घटत्वेन च पटविषयकाज्ज्ञानाद्घटत्वेन घटं द्रव्यत्वेन पटमवगाहमानस्य ज्ञानस्य वैलक्षण्याद्युपपादानस्याशक्यत्वात्, ज्ञानस्वरूपत्वे घटपटावित्यादि समूहालम्बनीयघटपटादिविषयतानामभिन्नतापत्त्या तादृशज्ञानस्य घटत्वावच्छिन्नपटादिनिष्ठविषयताशालितया भ्रमत्वापत्तिः, ज्ञानविषयोभयरूपत्वे च जातिमान् घट इत्यादिसमूहालम्बनज्ञानीयघटत्वादिविषयताया वैचित्र्यानुपपत्तिः—ज्ञानविषययोरविशेषादिति जातिमानित्याद्याकारिकैकविधघटत्वादिविषयताशालिज्ञानात्तादृशबुद्धेर्विलक्षणाकारता न स्यादित्यादियुक्त्या विषयताया विषयादिभेदभिन्नविषयतानामनुगमकतया च विषयतात्वस्यातिरिक्ततासिद्धिः,- तथा प्रतियोगितायाः प्रतियोगिस्वरूपत्वे घटादिनिष्ठानां घटत्वद्रव्यत्वादिरूपविभिन्नधर्मावच्छिन्नानां संयोगसमवायादिरूपाविभिन्नसम्बन्धावच्छिन्नप्रतियोगितानां अवैलक्षण्येनाभाववैलक्षण्यानुपपत्तिः, अभाव स्वरूपत्वे घटाद्यभावीयघटत्वाद्यवच्छिन्नप्रतियोगित्वात्किंचिद्विशिष्टघटाभावाभावत्वाद्यवच्छिन्नप्रतियोगितानामवैलक्षण्यापत्तेः, घटत्वादेः प्रतियोगित्वादिन्यूनवृत्तितया तदवच्छेदकत्वानुपपत्तेः, घटाद्यभावस्य पटादिसाधारण्येन पटादेरपि तत्प्रतियोगितापत्तेश्चेत्यादियुक्त्या प्रतियोगित्वमप्यतिरिक्तं सिद्ध्यति; एवमधिकरणत्वं नाधिकरणस्वरूपमाधेयस्वरूपं वा, भूतले घटसंयोगदशायामिव परस्परासंयुक्तघटभूतलसत्त्वदशायामपि इदानीं भूतलं घटवदित्यपि प्रत्ययप्रसङ्गात्, संयोगरूपत्वे आधेयत्वस्यापि तुल्ययुक्त्या तद्रूपतया आधारत्वाधेयत्वयोरभेदप्रसङ्गेन वैपरीत्येनाधाराधेयभावप्रत्यय प्रसङ्गादिति, तदप्यतिरिक्तः पदार्थः । सम्बन्धत्वमपि क्लृप्तपदार्थान्तर्भावेन दुर्वचमिति पदार्थान्तरमेवेति भावः । आदिपदादभावत्वादिपरिग्रहः ।

इदन्तु बोध्यम्, अभावत्वं प्रतियोगित्वान्नातिरिच्यते, तदभावस्य तत्प्रति योगित्वनियमात् ; नचैवं घटादेर्घटादिभेदाभावत्वापत्त्या घटादिमति भूतले घटभेदो नास्तीत्यादिप्रतीत्यापत्तिरिति वाच्यम्, संसर्गावच्छिन्न प्रतियोगिताया एवाऽभावत्वरूपत्वोपगमात् , घटादिभेदस्य घटत्वाद्यत्यन्ता भावसमनियतत्वेन तदभिन्नतया घटत्वादौ तदीयसंसर्गावच्छिन्नप्रति योगितासत्त्वात्तेनैव तदभावप्रत्यायनात् । नचैवमपि घटभेदादेः घटा द्यभावत्वानुपपत्तिः, तदप्रतियोगित्वादिति वाच्यम् , अत्यन्ताभावत्वात्म कानुयोगिताविशेषस्यैव प्रतियोगितानतिरिक्तत्वोपगमादिति ॥

इति श्रीमहामहोपाध्यायगदाधरभट्टाचार्यविरचितायां
अनुमानदीधितिटिप्पण्यां सिद्धान्तलक्षणम् ॥



# विषयसूची।

# शास्त्रमुक्तावली.

THE

# SASTHRAMUKTHAVALI.

(A COLLECTION OF VEDANTA MIMAMSA AND NYAYA WORKS)

EDITED BY

**P. B. ANANTHA CHARIAR**

PRINTED AT THE
SRI SUDARSANA PRESS
CONJEEVERAM.

८५

श्रीकाञ्ची प्रतिवादिभयङ्करं अनन्ताचार्येण परिशोधिता,

श्रीसुदर्शनमुद्राक्षरशालायां
सम्मुद्र्यते ।

॥ श्रीकाञ्ची ॥



अस्या वार्षिकमूल्यम् , रू. ५—६—०.

" त्रिदण्डधारणं शस्तं " मिति । न गुरुलघुनोस्तुल्यविकल्प इति उपवीतस्कन्ध एवोक्तम् । तस्मात् त्रिदण्डधारणं चतुर्णामपि यतीनां अविशेषेण मुख्य मिति सिद्धम् ।

इति यतिलिङ्गसमर्थने

द्वितीयस्स्कन्धः ।



एवमेतेषां शिखाप्यवश्यं धार्या । तत्र शौनकः- " शिखावर्जं ऋतु सन्धिषु वापयेत् । न रोमाणि वापयेत् । " इति । लिखितः-

ऋतुसन्धिषु सर्वत्र चातुर्मास्यान्तरं विना ।
पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः ॥

त्रिस्थानलोमवपने प्रजापत्यं समाचरेत् ।
प्रणायामशतं कुर्या " दिति । मेधातिथिः-
" कक्षोपस्थशिखावर्जं मुण्डयेत शिरो यतिः । " इति ।

अत्रिः-

न प्रयायाच्चतुर्मासान् वपनं कारयेन्न च ।
आरम्भोत्थानदिनयोः वापयेद्वपनेपि तु ।
अधःकण्ठशिखाक्षिभ्रूरोमाणि न हि जातुचित् ॥ " इति ।

एवमादिभिः बहुभिः वचनैः शिखावपनस्य प्रतिषेधात् तदनुष्ठाने प्रायश्चित्तविधानाच्च न मुण्डनं कार्यम् ।

ननु " मुण्डमेव परिग्राह्यम् " " अरण्ये नित्यमुण्डस्स्यात् " " अप्रतिष्ठो मुनिर्मुण्ड " इत्यादिना यतीनाम्मौण्ड्यमपि प्रतीयते । सत्यम्, न तावता शिखावपनसिद्धिः । मुण्डनं हि वपनमात्रम्,

" कक्षोपस्थशिखावर्जं ऋतुसन्धिषु वापयेत् ।
न त्रैमुण्ड्यमतिक्रामेत् भिक्षुस्संवत्सरे क्वचित् ॥

ऋतुसन्धिषु सर्वत्र चातुर्मास्यान्तरं विना ।
पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः ॥
अलाभे व्याधिपीडायां राजचोराद्युपद्रवे ।
वापयेत्पौर्णमास्यादि यावत्स्यात् कृष्णपञ्चमी ॥ ”

“ शिखावर्जं ऋतुसन्धिषु वापये ” दित्यादिस्मृतिषु मुण्डनवपनशब्दयोः पर्यायत्वेन प्रयोगात् । अतः न क्वचित् शिखावपनप्रसङ्गः । तस्मात् “ मुण्ड शिखी च ” “ शिखी मुण्डो वा ” इत्यादि तदनुरोधेन वर्णनीयम् । “ मुण्डः शिखीचेति भवेत् ” — शिखावर्जं उप्तकेशो भवेत् इत्यर्थः । तादितरत्सर्वं स्मृतिजातं श्रुतिविरुद्धत्वादनादरणीयम् । “ सशिखं वपनं कृत्वे ” ति श्रुतिरितिचेन्न;— शिखावपनाप्रतिपादनात् । सशब्देन हि शिखायाः केवलं वपन सम्बन्धमात्रं प्रतीयते; तद्विशेषस्तु योग्योङ्गीकार्यः, सच प्रमाणाबाधितः, इह तु शिखायाः कर्मतया सम्बन्धः “ शिखावर्जं ” मित्यादिना प्रमाणान्तरेण प्रतिक्षिप्त इति शिखावपनयोरेकशिरोन्वयरूपसम्बन्धः परिशिष्यते । यथा सविष्टरमन्नं भुञ्जीतेत्यत्र विष्टरस्य भोजनकर्मत्वेनान्वेतुमयोग्यस्य भोजनेनैकपुरुष रूपसम्बन्धः । सघृतमन्नं भुञ्जीतेत्यादौ योग्यत्वात् कर्मत्वेन सम्बन्धः न निवार्यते । अतः “ स शिखं वपनं कृत्वा ” इत्यस्यायमर्थः— यथा सशिखं शिरो भवति तथा वपनं कृत्वेति । न चैतत् पूर्वापरविरुद्धम्, एतत्प्रतिकूलार्थ पूर्वापरवाक्यस्यासिद्धेः । असिद्धिश्च उपवीतस्कन्ध एवोपपादिता । अतः उपवीतादिवत् शिखापि चतुर्णामपि यतीनां अवश्यं धार्येति सिद्धम् । तस्मात् कुटीचकबहूदकहंसपरमहंसानां उपवीतत्रिदण्डशिखादिलक्षणं लिङ्गं साधारणम्, वृत्तिभेदेन तु भेदस्तेषाम्, इति व्यवस्थितम् । एतद्विपरीतलिङ्गपरिग्रहः कलिविलसित इति हारीतादिभिरुक्तम्—

“ प्राप्ते कलियुगे घोरे इतोन्ये भिक्षुलिङ्गिनः ।
सम्भविष्यन्ति ते सर्वे गौतमाग्निविदीपिताः ॥
वेदार्थं चान्यथा सर्वे प्रवक्ष्यन्ति कलौ युगे ।
नग्नाः प्रच्छन्नबौद्धाश्च विनिन्दन्ति त्रयीमयम् ॥

भक्षयिष्यन्ति शूद्रान्नं वयं मुक्ता इति ब्रुवन् ।
अन्यानपि स्वधर्मस्थान् चालयिष्यन्ति ते कलौ ॥
एवं वेषं समाश्रित्य जीवन्ति बहवो द्विजाः ।
नरके रौरवे घोरे कर्मत्यागात् पतन्ति ते ॥
तस्मात्तान्नालपेत्प्राज्ञः न निरीक्षेत वापि तान् ।
अलोकनेन तेषां तु शुद्ध्यते भानुदर्शनात् ॥
नग्नं वाऽनुपनीतं वा यश्श्राद्धे भोजयेद्द्विजम् ।
रेतोमूत्रपुरीषादीन् स पितृभ्यः प्रयच्छति ॥ ”

इति यतिलिङ्गसमर्थने तृतीयस्स्कन्धः ।

वात्स्यश्रीवरदाचार्यविरचितं
यतिलिङ्गसमर्थनं
समाप्तम् ।

कवितार्किकसिंह—सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्ताचार्यविरचितः

# यतिलिङ्गभेदनिवारणवादः ।

———(*)———

श्रितान् परमहंसतां परमहंस इत्युक्तितः

त्रयीपथमसौगतान् कपटसौगतान् खण्डयन् ।

मुनिर्जयति लक्ष्मणो मुदमुदञ्चयन्नञ्चतां

मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिस्सूक्तिभिः ॥

ये पुनश्शङ्करादयोऽर्वाचीनपरमहंसास्ते बाह्यवेषपरिग्रहमधिकृत्य पृच्छयन्ते किमिति परमहंसैः ब्रह्मसूत्रमुत्सृज्यते ?

(१) किं तेषु तत्प्रापकाभावात् ?

(२) उत सामान्यतः प्राप्तस्यापि विशेषतो बाधात् ?

(३) यद्वा वैकल्पिकतया परित्यागेपि प्रत्यवायविरहात् ?

(४) उताङ्गिनिवृत्तेरेवार्थात्तदङ्गस्यापि निवृत्तेः ?

(५) अथवा पूर्वानुष्ठानमात्रात् ? इति ।

(१) न प्रथमः— श्रुतिस्मृतिभिस्सामान्यतो विशेषतश्च तत्प्राप्तेः । द्विजसामान्यतः प्राप्तिस्तावत्सहजा, निर्विवादैव । परिव्राजकसामान्यतः प्राप्तिस्तावदभिधीयते । यथाह— वसिष्ठः—" यज्ञोपवीत्युदककमण्डलुहस्तः " इति ।

अङ्गिराः— " यतीनां त्रीणि शुक्लानि भवन्त्येतानि नित्यशः ।

यज्ञोपवीतं दन्ताश्च तथा जन्तुनिवारणम् ॥ " इति ।

शौनकः— " अथ युवा सुवासा इति काषायवासः, सखा मे गोपायेति त्रिदण्डं गृह्णाति, तच्छंयोरावृणीमह इति यज्ञोपवीत " मिति ।

दत्तात्रेयः— " मोक्षाश्रमे स्मृतं वस्त्रं रक्तं यद्धातुरञ्जितम् ।

कार्यं यज्ञोपवीतन्तु सितं नवगुणान्वितम् ॥ " इति ।

समान्यतश्च यज्ञोपवीतत्यागं निषेधन्ति । यथाह— मेधातिथिः—

" गृहीतं यत्त्रिदण्डादेरविनष्टन्तु न त्यजेत् ।

समुद्रं गच्छ स्वाहेति विनष्टं प्रक्षिपेज्जले ॥

प्रक्षिप्य चान्यदादद्याद्गायत्र्या प्रणवेन वा ।

तच्छंयोरित्युपवीतमद्भिलिङ्गाभिः कमण्डलुम् ॥ " इति ।

अङ्गिराश्च— " यतेर्लिङ्गं प्रवक्ष्यामि येनासौ लक्ष्यते यतिः ।
ब्रह्मसूत्रं त्रिदण्डञ्च वस्त्रं जन्तुनिवारणम् ॥
शिक्यं पात्रं ब्रसी चैव कौपीनं कटिवेष्टनम् ।
यस्यैतद्विद्यते लिङ्गं स यतिर्नेतरो यतिः ॥ " इति ।

उपवीतपरित्यागे प्रत्यवायं स्मरन्ति च । यथाह— अत्रिः—
" ब्रह्मसूत्रं त्रिदैवत्यं ब्रह्मविष्णुशिवात्मकम् ।
परित्यजन्ति विप्रा ये मोहात्तर्कोपजीविनः ॥
स्वर्गापवर्गमार्गाभ्यां प्रच्युतास्ते न संशयः । " इति ।

यद्यप्यत्र विप्रशब्दस्सामान्यवचनः, तथापि पारिव्रज्यमेवाधिकृत्य प्रवृत्तत्वात् विशेषार्थ एव । सामान्यतो निर्देशस्तु सर्वेषां प्रत्यवायसाम्यात् । तथाहि— उशनास्तत्परित्यागे सर्वेषामाश्रमिणां पतनमेवाह—
" ब्रह्मसूत्रपरित्यागाद्ब्रह्मचारी गृही वनी ।
परिव्राट् चापि पतति तस्मात्तन्न परित्यजेत् ॥ " इति ।

तत्परित्यागे बहूनि प्रायश्चित्तानि सस्मरुः । यथा— अत्रिरेव—
" त्यक्त्वा यज्ञोपवीतन्तु षट्कृच्छ्राणि समाचरेत् ॥ "

वृद्धजाबालिश्च— " हीनो यज्ञोपवीतेन यदि स्याद्ध्यानभिक्षुकः ।
तस्य क्रिया निष्फलास्स्युः प्रायश्चित्तं विधीयते ॥
गायत्रीसहितानेव प्राजापत्यान् षडाचरेत् ।
पुनस्संस्कारमाहृत्य धार्यं यज्ञोपवीतकम् ॥ " इति ।

हारीतः— " विना यज्ञोपवीतेन यत्कृतं भोजनादिकम् ।
तत्पापप्रशमायालं प्रायश्चित्तं ब्रवीमि वः ॥
तेषां तु भोजनादीनां प्रत्यहं सुसमाधिभिः ।
सहस्राद्यैरसुयमैर्विधिपूर्वकृतैश्शुचिः ॥ " इति ।

असमीक्षितदशापरित्यक्तब्रह्मसूत्रैश्च यादवप्रकाशैः समीक्ष्य संजातानुशयैः सप्रमाणमनुयुक्ताः वासुदेवयात्रोत्सवसमागताः नानादिगन्तवास्तव्यादिशिष्टाश्च प्रायश्चित्तमेव उत्तरं ददुः । भ्रष्टस्तर्ह्यसाविति चेन्न;— प्रायश्चित्तात्पूर्वमेव तथात्वस्य प्राचीनैर्निश्चितत्वात् । तत्समुच्चितस्यैव यतिधर्मस्याद्यापि मानवादिवत् अविगीतशिष्टपरिग्रहात् ।

(२)एवं परिव्राजकानां सामान्यतः प्राप्तं ब्रह्मसूत्रम् । परमहंसेष्वेव विशेषतोपि प्राप्तिर्दृश्यते ।

तथाहि— शाट्यायनकोपनिषदि समाम्नायते—

' अथ ह यद्ब्रह्म परमं सनातनं ये श्रोत्रिया अकामहता अधीयुः ।
शान्तो दान्त उपरतस्तितिक्षुर्योनूचानो ह्यभिजिज्ञास्यमानः ।
त्यक्तेषणो ह्यनृणस्तद्विदित्वा मौनी वसन्नाश्रमे यत्र तत्र ।
अथाश्रमं चरमं सम्प्रविश्य सच द्वितीयममृतं सम्प्रयाति ।
अखिलं विश्वं ब्रह्मभावनया निचाय्य चरेत्पृथिव्यां विष्णुलिङ्गी निगूढः ।
परमहंसमाश्रमं सम्प्रविश्य यथोपपत्ति पञ्चमात्रां दधानः ।
तदत्र श्लोकौ भवतः—
त्रिदण्डमुपवीतञ्च वासः कोपीनवेष्टनम् ।
शिक्यं कवचमित्येतद्बिभृयाद्यावदायुषम् ॥
त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् ।
निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥ इति ।

अथ खलु सौम्य कुटीचको बहूदको हंसः परमहंस इत्येते चतुर्विधाः परिव्राजका भवन्ति । सर्वे विष्णुलिङ्गिनः सदा स्वात्मानं आत्मना ब्रह्मभावं भावयन्तः सुशीलिनः पुण्यश्लोका भवन्ती '' ति ।

इमामेवोपनिषदमुपबृंहयन् भगवान् पराशरः स्मरति— '' तत्र परिव्राजकाश्चतुर्विधा भवन्ति, कुटीचको बहूदको हंसः परमहंसश्चेति । तत्र कुटीचका नाम-- पुत्रादिभिः कुटीं कारयित्वा कामक्रोधलोभमदमात्सर्यादीन् परित्यज्य विधिवत्संन्यासं कृत्वा त्रिदण्डजलपवित्रकाषायवस्त्रोपवीतधारिणः स्नानशौचाचमनजपस्वाध्यायब्रह्मचर्यज्ञानतत्पराः पुत्रादेरेव भिक्षाकालेऽन्नं देहयात्रामात्रमुपयुञ्जानाः तस्यां कुटौ नित्यं वसन्त आत्मानं मोक्षयन्ते । बहूदका नाम— त्रिदण्डकमण्डलुजलपवित्रशिक्ययज्ञोपवीतिनो वेदान्तार्थावबोधकाः साधुवृत्तेषु ब्राह्मणकुलेषु भैक्षचर्यां चरन्त आत्मानं मोक्षयन्ते । हंसा नाम— त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतरक्तकाषायवाससो गोमूत्रगोमयाहारा एकरात्रं त्रिरात्रं षड्रात्रं मासोपवासपक्षोपवासकृच्छ्रातिकृच्छ्रचान्द्रायणसान्तपनपराकतुलापु-

-ष्यादीनि व्रतानि चरन्तो गोद्विजाढ्येषु पुण्येषु देशेषु वसन्त आत्मानं मोक्षयन्ते । परमहंसा नाम– त्रिदण्डजलपवित्रशिक्ययज्ञोपवीतिनो ऽन्तर्वास वहिर्वासधारिणो ग्रामैकरात्रवासिनो नगरतीर्थजनपदेषु पंचरात्रं षड्रात्रं क्षार लवणवर्जं भिक्षाकाले शीर्णपर्णपुटं कृत्वा ब्राह्मणकुलादेव भैक्षं गृहीत्वा अष्टौ ग्रासानेव भुञ्जानास्सन्ध्योपासनतत्परा नित्यं वृक्षमूले वसन्त आत्मानं मोक्षयन्ते ।"

एवं शाट्यायनकश्रुत्या पराशरस्मृत्या च सुप्रसिद्धमर्थमत्रिप्रभृतयोऽपि वृत्ति भेदभिदुराणां चतुर्णां परिव्राजकानां लिङ्गभेदनिषेधद्वारा सामान्यतो दर्शयन्ति ।

यथा– "चतुर्विधा भिक्षवस्तु स्मृतास्सामान्यलिङ्गिनः ।
तेषां पृथक् पृथक् नाम वृत्तिभेदात्कृतं श्रुतौ ।
कुटीचको बहूदश्च हंसश्चैव तृतीयकः ॥
चतुर्थः परमो हंसो यो यः पश्चात् स उत्तमः ।
लिङ्गन्तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम् ॥" इति ।

वृत्तिभेदश्च पराशरस्मृत्या प्रागेव दर्शितः । एवं परमहंसानां विशेषत एक प्राप्तेः, तत्परित्यागनिषेधाच्च द्वितीयः पक्षो निरस्तः ।

(३) यद्यपि सामान्यमात्रं विशेषबलात्सङ्कोचमाप्नोति, तथापि न विशेषाद्विशेषः पराभवमर्हति; अविशेषाद्विपरिवर्तप्रसङ्गाच्च । दृष्टश्चास्मदुक्तो विशेषः । त्वदभिमतस्त्वद्यापि न दृश्यते । ननु "नखानि निकृत्य यज्ञोपवीतं विसृजे" दिति दृश्यत इति चेन्न ;— "नखानि निकृत्य पुराणवस्त्रयज्ञोपवीतकमण्डलून् त्यक्त्वा नवान् प्रगृह्याश्रमं प्रविशे" दिति श्रुत्यैव त्यागग्रहणयोः पुराणनूतनविषयत्वस्य न्यायनिरपेक्षमेव व्यवस्थापनेन विरोधप्रशमनात्सामान्ययज्ञोपवीतस्य पुराणत्वविशेषिते पर्यवसातुमचितत्वात् , सामान्य निषेधस्य नूतनविशेषविधिना स्पर्धितुमशक्तेः । 'न हिंस्या' दित्यादिवत् । नच "विसृजे" दित्यस्य न गृह्णीयादित्यर्थः, येन नूतनग्रहणपरतया विषयव्यवस्था दुःस्थिता स्यात् । नच तद्युक्तम् , उपचारप्रसङ्गात् । यद्यपि गृहीतागृहीतविषयं विसर्जनं कथञ्चित्पश्यसि, तथापि पूर्वधृतविषयत्वमेव स्वारसिकम् । "नवान्प्रगृह्ये" त्यस्यानादरे च दण्डादेरसंग्रहसिद्धिः । अन्यथा पूर्वोदाहृतविशेषश्रुतिविरोधश्च । अतएव "बहिस्सूत्रं त्यजेद्बुधः" इत्येतदपि पुराण ब्रह्मसूत्रत्यागविषयं मन्तव्यम् ।

ननु "ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वे" ति ब्रह्मचारिणोपि पारिव्रज्यं विधीयते, नच तस्य द्वितीयं ब्रह्मसूत्रमस्ति, ततश्च कथं तद्विषये "बहिस्सूत्रं त्यजे" दिति वचनं योजनीयमिति चेत् ? कथं वा छन्दोगब्रह्मचारिणां परिव्रज्यायां "सशिखं वपनं कृत्वे" ति शिखावपनं योजयिष्यसि । सम्भवद्विषयं शिखावपनमिति चेत् ? तर्हि सम्भवद्विषयोऽयं बहिस्सूत्रत्यागविधिरपीति किं न पश्यसि ।

किंच– प्रमाणान्तरविरोधपरिहारार्थं बहिस्सूत्रमित्यर्थान्तरं वर्णयन्ति । बहिस्सूत्रमित्यव्ययीभावः । तेन सूत्राद्बहिर्भूतं समस्तमपि परित्यजेदित्यर्थः । संन्यस्यतो ब्रह्मसूत्रातिरिक्तं सर्वमपि परित्याज्यमित्यनेन संन्यासानुगुणं समस्तनैरपेक्ष्यमुच्यते, तेन न ब्रह्मसूत्रपरित्यागसिद्धिः । 'सशिखं वपनं कृत्वे' त्यपि 'सविष्टरमन्नं भुञ्जीते' त्यादिवत्कर्तव्यसाहित्येनान्वयः । तेन शिखासहित एव शेषवपनं कुर्यादित्यर्थः । न पुनः सघृतमन्नं भुञ्जीतेत्यादिवत्, बहुप्रमाणविरोधात् ।

ननु "यदक्षरं परं ब्रह्म तत्सूत्रमितिकल्पयेत् । यमिनो ज्ञानाशिखिनः शिखायज्ञोपवीतिनः" इत्यादि वचनबलात् सामान्यतः पुराणनूतनसमस्तप्रतिषेध एवाभिप्रेत इति गम्यत इति चेत् ? मैवम्– अन्यपरत्वादस्य वाक्यस्य । तथाहि— इदं वाक्यं विद्वद्विषयं वा, विविदिषुविषयं वा, परमहंसविषयं वा? पूर्वत्र विद्यास्तुत्यर्थता युक्ता । तथाच "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" 'न कर्म लिप्यते नरे' इति वाक्यमधिकृत्य सूत्रितं भगवता बादरायणेन 'स्तुतयेनुमतिर्वे' ति । तेन ब्रह्मविदां शिरसि हृदि च यावदायुषं धार्यं शिखायज्ञोपवीतं ज्ञानान्वितं अत्यन्तं प्रशस्तमित्यर्थः । द्वितीये तु अकधानाविधिपरतैव 'यदक्षर' मित्यादिना व्यक्ता, दृष्टोपकारे सम्भवत्यदृष्टोपकारकल्पनायोगाच्च । अनयोश्च पक्षयोरस्यार्थस्य नाश्रमविशेषाङ्गत्वसिद्धिरपि । तृतीयस्तु स्यादपि, यद्याश्रमकर्मोक्तिः स्यात्, नच तत्र तत्पश्यामः । सत्यपि आश्रमप्रसङ्गे गृहस्थावस्थागतद्वितीयसूत्रत्यागमुपदिश्य विहितत्यागजातानुशयं प्रति अर्थवाद इति युक्तम्, अर्थवादलिङ्गभूयस्त्वात् । न ह्यत्र विधिरनुश्रयते, अन्यथा पूर्वोक्तश्रुत्यादिविरोधस्य दुष्परिहारत्वादिति ।

Sasthramukthavali-37&38.

# YATHILINGASAMARTHHANAM.

BY

SRI VARADACHARYA

AND

*YATHILINGABHEDABHANGAVADA*

(64th Chapter in the Sathadushani)

BY

SRI VEDANTA CHARYA



EDITED BY

P. B. ANANTHACHARYA

Printed at the

SRI SUDARSANA PRESS.

CONJEEVERAM.

1911.

शास्त्रमुक्तावली—नं ३७—३८.

वात्स्य श्री वरदगुरु विरचितं

# यतिलिङ्गसमर्थनम् ,

कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र श्रीवेदान्ताचार्य विरचितः

यतिलिङ्गभेदभङ्गवादश्च

( शतदूषण्यां ६४ तमो वादः )

———(*)———

श्रीकाञ्ची प्रतिवादिभयङ्करानन्ताचार्येण परिशोधितौ

श्रीसुदर्शनमुद्राक्षरशालायां

अमुद्र्येताम् ।

श्रीकाञ्ची ।

१९११

भवतु वैतद्वाक्यमनन्यपरम्, तथापि प्रागुक्तश्रुत्यादिबलाद्विकल्प एव स्यात्, न त्वेकान्ततो निषेधः, अन्यथा कुटीचकादीनामपि एकान्ततः तन्निषेधप्रसङ्गात् । न चैतद्वचनं परमहंसमेवाधिकृत्य प्रवृत्तम्, नियामकाभावात् ।

ननु यदि परमहंसमेवाधिकृत्य काचिच्छ्रुतिस्स्मृतिर्वा ब्रह्मसूत्रपरित्यागमेवान्ततो विदधीत तदा पूर्वोक्तश्रुतिस्मृत्यादिकं सर्वं यथाकथञ्चित् कुटीचकादित्रयान्तर्भूतव्यक्तिविशेषविषयं योजनीयमिति चेत्? अहो महर्षिस्त्वं देवानां प्रियस्य, यतस्त्वं आप्ततमबहुतरस्मृत्येककण्ठप्रत्यक्षश्रुतिविरुद्धार्थां क्वचित् कैश्चिदप्यनधीयमानां त्वत्पक्षपातिना विकल्पवादिना विज्ञानेश्वरेण अनाम्नातां तत्पक्षं विस्तरेण प्रतिक्षिपद्भिः भास्कराचार्ययादवप्रकाशमस्करिप्रभृतिभिरुद्धृत्यापरिहृतामन्यादृशीं श्रुतिं द्रष्टुमिच्छसि । यदि च सापि स्यात्; कथं सर्वस्मर्तॄणां ब्रह्मसूत्रधारणविधानैककण्ठ्यम्?

यच्च त्यागार्थं व्यासादिवचनमिति कैश्चित्पठ्यते, तदपि तत्तत्कोशेषु न पश्यामः; नचोदाहरन्ति पूर्वे निरूपकाः । नच प्रत्यक्षश्रुतिविरोधे वैदिकपरिगृहीतबहुस्मृतिविरोधे चाप्रसिद्धस्मृतिमात्रस्य जीवितमस्ति । लब्धजीवितत्वेपि आन्यपर्यमलेपकमतभङ्गे प्रपञ्चयिष्यते । अतस्तद्वचनकारिषु व्यासादिसमाख्यां सङ्केतेन प्रक्षिप्य धर्मसूनुरिव सत्यवादी भव ।

एतेन पञ्चरात्रादिमूलः परमहंसस्य ब्रह्मसूत्रपरित्याग इति निरस्तम्, प्रमाणभूतेषु तेषु तथाविधवचनादेरसम्भवात् । सम्भवे चान्यपरत्वस्य गृहीतुं युक्तत्वात् । परब्रह्मभूतभगवत्प्रीणनतत्तदर्थविशेषप्रपञ्चने हि पञ्चरात्रस्यैदम्पर्यम्, न सदाचारेषु । तत्र तु औदासीन्यमेव तस्येति न श्रुत्यादिविरोधे तत्र प्रगल्भतेति मध्यस्थदृष्ट्या पश्यामः । नच पञ्चरात्रमूलत्वेन भागवतपरिगृहीते नैरुक्तेपि वेदभागे परिव्राजकप्रकरणे भवदभिमतं यज्ञोपवीतादिप्रहाणं दृश्यते । नच शाण्डिल्यस्सूत्रयति । नच सात्वतादिषु सुरक्षितकोशासु संहितासु तथाविधवचनप्रसङ्गः । अतो युष्मत्कूटस्थपक्षपातिनां प्रक्षेपस्तथा स्याद्वा नवेति समीचीनदृष्ट्या भावय । अतः परमहंसेष्वपि द्विजसामान्यतः परिव्राजकसामान्यतस्तदवान्तरविशेषतश्च प्राप्तं ब्रह्मसूत्रं न विशेषतो बाधमर्हतीति सिद्धम् ।

नापि तृतीयः,- विषयव्यवस्थापनयोग्यानां वाक्यानां विरोधाभावादेवाष्टदोषदुष्ट विकल्पपर्यवसानायोगात् । अन्यपरतया निश्चितानां तु दुर्बलत्वादेव । विरोधे बलसाम्ये च सति हि गत्यन्तराभावाद्विकल्पस्स्वीक्रियते । नच गुरुलघुनो र्विकल्पस्सम्भवति, गुरुविधायकस्य शास्त्रस्यानुष्ठानलक्षणाप्रामाण्यप्रसङ्गात् । नहि लघौ सति गुरौ कश्चिदपि प्रवर्तते । मुख्यामुख्यतया तु विभागस्सम्भवेदपि, यद्यनन्यथासिद्धो लघुविधिस्सिद्ध्येत् । नच तदस्तीत्युक्तम् । नचामुख्यं भव द्विशेषमंगीकरोषि । नच मुख्यकल्पशक्तानाममुख्यकल्पस्वीकारो युक्तः । नच तेषां प्रत्यगात्मप्रावण्येन बाह्येष्वौदासीन्यादमुख्यकल्पपरिग्रह इति युक्तम्, शक्तस्यौदासीन्ये प्रत्यवायात् । नच वः कांचिदशक्तिं भास्करीयादयस्सूक्ष्मनिरू पणेपि पश्यन्ति । यथाहुः—

" कन्थां वहसि दुर्बुद्धे गर्दभेनापि दुर्भराम् ।
शिखायज्ञोपवीताभ्यां कस्ते भारः प्रसज्यते ॥
सन्ध्यावन्दनवेळायां मुक्तोऽहमिति मन्यसे ।
खण्डलड्डुकवेलायां दण्डमादाय धावसि ॥ " इति ।

यत्तु— न्यायविदापि विज्ञानेश्वरेणाप्युक्तम्— " यज्ञोपवीतधारणं वैक ल्पिकम्, यज्ञोपवीतं विसृजेदिति श्रुते " रिति; तदपि विकल्पासम्भवस्योक्तत्वात् स्वपक्षसंरक्षणाभिनिवेशकारितमित्यनादरणीयम् ।

नापि चतुर्थः,- ब्रह्मविदामप्यत्यन्तकर्मनिवृत्तेर्दूषितत्वात्; युष्माभिरपि प्रणवजपाचमनादिकर्मणामद्यापि क्रियमाणत्वात् । "तस्माद्यज्ञोपवीत्येवाधीयीते" त्यादेर्दुर्लंघत्वात, अर्थप्राप्तभोजनादिकर्मणां च अयज्ञोपवीतिनानुष्ठाने प्राय श्चित्तविधानात् ।

नापि पञ्चमः,- श्रुत्यादिविरुद्धस्याचारमात्रस्यानुपादेयत्वात् । पञ्चशिख दुर्वासःप्रभृतिपरिगृहीतपरिव्राजकस्तोमेषु ब्रह्मसूत्रपरित्यागस्य पुराणेष्वदर्शनात् । परिव्राजकानुकारिधनञ्जयादिषु ब्रह्मसूत्रपरित्यागाश्रवणात् । भवदीययूथ्यभा स्कराचार्ययादवप्रकाशभगवन्नाथमुनिपारम्पर्यविघटितत्वाद्भवत्पक्षप्रवेशितविसंवादै- क्याच्चानुविधेयाचारस्यासम्भवादिति ।

अतस्सिद्धं परमहंसैरपि यज्ञोपवीतमवश्यं धार्यमिति ।

एवमुपवीतोक्तन्यायेन परिव्राजकसामान्यतः प्राप्तेः, तथा परमहंसमेवाधि कृत्य त्रिदण्डविधानात्, चतुर्णामपि लिङ्गभेदनिषेधाच्च तस्यैकदण्डधारणे नियमोपि निरस्तः ।

अथ स्यात्- " न चात ऊर्ध्वं शुक्लमम्बरं बिभृयादेकदण्डी त्रिदण्डी वे " ति बोधायनादिवचनात्त्रिदण्डैकदण्डधारणयोर्विकल्प इति; भवत्वेवम्, तथापि परमहंसस्य एकदण्डधारणमेव-इतरेषां त्रिदण्डधारणमेवेति नास्ति नियमः, अविशेषेण तेषां प्रसक्तेः । भवत्वेवं का नो हानिरिति चेत्? नियमाभिमानहानिः । गुरुलघुनोस्तुल्यविकल्पानुपपत्तिं चात्र यादवप्रकाशादयः प्राहुः । अतो मुख्या मुख्यतयैवायं विकल्पस्स्यात् । तदेतद्भगवान् व्यासः स्पष्टयति- " त्रिदण्ड धारणं शस्तम् " इति । बोधायनादिसामान्यवचनविकल्पितैकदण्डधारणस्य त्रिदण्डालाभरूपापद्विषयता हारीतमेधातिथिभ्यां व्यवस्थापिता ।



" त्रिदण्डं वैणवं सौम्यं सत्वचं समपर्वकम् ।
वेष्टितं कृष्णगोवालरज्ज्वा तु चतुरङ्गुलम् ॥
नष्टे जलपवित्रे च त्रिदण्डे वा प्रमादतः ।
एकन्तु वैणवं दण्डं पालाशं बैल्वमेव वा ॥
गृहीत्वा विचरेत्तावद्यावल्लभ्यं त्रिदण्डकम् ।
यत्नेनान्वेषयेन्नित्यमप्रमत्तः समाहितः ॥ " इति हारीतः ।

मेधातिथिस्तु- " यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेत् । " इति । न चैतत्प्रक्रान्तत्रिदण्डधारणपुरुषविशेषविषयमिति नियन्तुं शक्यम् ! ' एक दण्डी त्रिदण्डीवे ' त्यस्याद्यापि तुल्यत्वनिश्चयाभावात्; यद्यपि च प्रथममेव कस्यचित्त्रिदण्डालाभादेकदण्डग्रहणं सम्भवति, तथापि न तत्र प्रक्रमपरि नियतिरङ्गीकर्तुं शक्या, अमुख्यत्वात् । " यावन्न स्युस्त्रयो दण्डास्तावदेकेन पर्यटेत् " इत्यस्य चाविशेषेण प्रक्रमेपि प्रवृत्तेः ।

किञ्च- प्रत्यक्षश्रुतिसिद्धं त्रिदण्डधारणम्, स्मार्तस्तु विकल्पः, पूर्वन्तु श्रुतिस्मृतित्युभयसिद्धम्, उत्तरत्र तु स्मृतिरेव । " यद्वै किञ्च मनुरवदत्त द्भेषजम् । " "मन्वर्थविपरीता तु या स्मृतिस्सा न शस्यते" इत्यादि श्रुतिस्मृतिभिः

राप्ततमत्वेन परिगृहीतमन्वादिस्मृतिसिद्धं त्रिदण्डधारणम् , विकल्पस्तु यत्किञ्चित्स्मृतिसिद्धः । भूयस्यः स्मृतयस्त्रिदण्डधारणे पूर्वोपात्ता उपाधास्यमानाश्च, विकल्पे तु द्वे तिस्रः सन्ति नवेति न जानीमः ।

तथाहि दक्षबृहस्पती–

"मेखलाजिनदण्डेन ब्रह्मचारीति लक्ष्यते ।
गृहस्थो बष्टिवेदाद्यैर्नखरोमैर्वनाश्रितः ॥
त्रिदण्डेन यतिश्चेति लक्षणानि पृथक् पृथक् ।" इति ।

शाण्डिल्यः– "दण्डानि त्रीणि सङ्गृह्य धारयेद्विधिपूर्वकम् ।"

अत्रिः– लिङ्गन्तु वैष्णवं तेषां त्रिदण्डं सपवित्रकम् ।
त्रिदण्डेन यतिश्चेति लक्षणं वै श्रुतं स्मृतौ ॥"

दत्तात्रेयः– "त्रिदण्डरूपभृग्विप्रः साक्षान्नारायणः स्मृतः ।
त्रिदण्डी पूज्यते येन विष्णुस्तेन प्रपूजितः ॥
अष्टाक्षरेण मन्त्रेण नित्यं नारायणात्मना ।
नमस्यो भक्तिभावेन विष्णुरूपी त्रिदण्डभृक् ।
त्रिदण्डं लिङ्गमाश्रित्य जीवन्ति बहवो द्विजाः ।
यो हि ब्रह्म न जानाति त्रिदण्डार्हो न स स्मृतः ॥"

अत्रिदत्तात्रेयौ– "काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः ।
त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥"

हारीतः– "विष्णुरूपं त्रिदण्डाख्यं सर्वदा धारयेद्यतिः ।
कुर्यात्त्रिदण्डग्रहणं कालक्षेपं न कारयेत्" ॥

वृद्धदक्षः– "केशमात्रान् समग्रन्थीन् त्रिदण्डान् वैणवान् यतिः ।"

धारयेदिति शेषः । इत्थं परश्शतास्स्मृतयः विस्तरभयान्न लिख्यन्ते । अतो गुरुलघुविकल्पानुपपत्तेः शस्ताशस्तत्वकण्ठोक्तेः त्रिदण्डालाभदशाविषयत्वप्रतिष्ठापनात् , त्रिदण्डधारणस्य प्रत्यक्षश्रुतिसिद्धत्वात् , आप्ततमबहुस्मृत्युपबृंहितत्वात् , त्रिदण्डधारणमेव चतुर्णां परिव्राजकानामविशेषेण मुख्यम् ; एकदण्डधारणन्त्वमुख्यम्; तच्च आपद्दशायां चतुर्णामपि सम्भवति; इति सिद्धम् ।

अनेनैव न्यायेन परमहंसस्य शिखावर्जनमपि अनुपपन्नम्, चतुर्णामपि लिङ्गभेदनिषेधस्य दर्शितत्वात्, विशेषविधायकासिद्धेः । 'मुण्डः शिखीवे' त्यादिविकल्पस्यापि त्रिदण्डैकदण्डधारणविकल्पवन्मुख्यामुख्यतयैव निर्वाह्यत्वात् । सम्भवति हि केषांचित् शिरसि व्याध्यादिवशात्केशानुत्पत्तिः । शौनक–लिखित– गालवात्रि– प्रभृतिभिः शिखाधारणस्यैव स्मरणाच्च । गालवेन तु 'त्रिस्थानलोमवपनं कृत्वा प्राजापत्यं कृत्वा प्राणायामशतं चरेत्' इति शिखा वपने प्रायश्चित्तविधानात् विकल्पवाक्यस्य मुण्डनवाक्यस्य च यथाकथञ्चिद्यो जनीयतया समुच्चयार्थतां शिखाव्यतिरिक्तमुण्डनविषयतां शिखासम्बन्धमात्र विषयताञ्च यतिलिङ्गसमर्थने परमाचार्याः आहुः । शिखावपनमन्तरेण वपनेपि मुण्डशब्दस्तत्रैव दर्शितः । यथाह– लिखितः–

"पौर्णमास्यां शिखावर्जं मुण्डयेत शिरो यतिः ।
अलाभे व्याधिपीडायां राजचोराद्युपद्रवे ॥
वापयेत्पौर्णमास्यादि यावत्स्यात् कृष्णपञ्चमी । " इति ।

मेधातिथिः- कक्षोपस्थशिखावर्जं मुण्डयेत शिरो यतिः । इति ।

एवमन्यैरपि—

"कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत् ।
न त्रैमुण्ड्यमतिक्रामेद्भिक्षुस्संवत्सरे क्वचित् ॥"

इत्यादिषु शिखाव्यतिरिक्तांशवपनेपि मुण्डशब्दस्य प्रयोगान्मुण्डनवपनशब्दयोः पर्यायपदविशेषत्वोपपादनाच्च सामान्यो मुण्डशब्दश्शिखाव्यतिरिक्तविषय इति स्वारसिकम्, विकल्पाङ्गीकारेत्वमुख्यत्वं दर्शितमस्माभिः । वाशब्दश्चार्थं इति परमाचार्या व्याचख्युः ।

अतः परमहंसैरप्येकमुपवीतमवश्यं धार्यम्, त्रिदण्डशिखे च मुख्यतया परिग्राह्ये, इति सिद्धम् । तदेतत् 'वर्णाश्रमोचिते' त्युचितशब्देन भाष्यकारैरपि सूचितमिति ।

**इति शतदूषण्यां यतिलिङ्गभेदभङ्गवादः ।**



स्पष्टमाम्नायते-“चत्वारः पुरुषा इति बाध्वः, शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति, शरीरपुरुष इति यमवोचाम स एवायं दैहिक आत्मा तस्य योयमशरीरः प्रज्ञात्मा सरसः, छन्दः पुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्याकारो रसः, वेदपुरुष इति यमवोचाम येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसस्तस्माद्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत्, महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतानि तस्यैतस्यासावादित्यो रसस्स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेव तदिति विद्यात्तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति तदप्येतदृषिणोक्तं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आ प्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेत्येतामनुविधं संहितां सन्धीयमानां मन्य इति ह स्माह बाध्वः; एतं ह्येव बह्वृचा महत्युक्थ्ये मीमांसन्ते एतमग्नावध्वर्यव एतम्महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्सु एतमोषधीष्वेतं वनस्पतिष्वेतञ्चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते- स एष संवत्सरसममानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मे’ ति शरीरपुरुषादीनाञ्चतुर्णामधिकरणत्वेन प्रज्ञात्मादयो रसा उच्यन्ते । अकारस्यापि सर्ववाक्प्रकृतित्वेन पूर्वोक्तस्य युक्तं विकृतित्वेनोक्तवर्णान्तराधारत्वम् । वेदविदो वेदधारणप्रसिद्धेः ऋत्विग्विशेषे ब्रह्मण्यपि युक्तम् । आदित्ये तु परब्रह्मस्थानत्वं स्पष्टम् । दैहिक इति शरीरपुरुषस्य तच्छब्दवाच्यत्वोपपादकावयवार्थसम्बन्धः कथ्यते । अक्षरसमाम्नाय इत्युक्तचैव अक्षरसमूहात्मकच्छन्दसा सम्बन्धो द्वितीयपुरुषस्य लभ्यते । वेदपुरुषे तु येनर्ग्वेदं वेदेति तृतीयया लभ्यते । महापुरुषशब्दस्तु कर्मधारयः । तत्रैव महच्छब्दस्यात्वविधानात् । ततस्तत्रावयवार्थमहत्त्वयोगः प्रध्वंसयन्नन्यानि भूतानीत्यनेनोक्तः । संवत्सरशब्दश्च परे ब्रह्मणि वाराहे विंशेध्याये आदि

स्वमण्डलाधिष्ठातरि संवत्सराभिमानिनि विष्णुरूपे प्रसिद्धः— " एते मासा स्तथादित्याः स्वयं संवत्सरो हरिः । " इति । एते आदित्याः मासाभिमानिनो मण्डलाधिकारिणः सर्वमासानुवृत्तसंवत्सराभिमानी सर्वमासेष्वधिष्ठाता हरिरित्यर्थः । भारते च सहस्रनामसु " अहस्संवत्सरो व्याळ " इति संवत्सरशब्दो विष्णोर्नामसु पठ्यते । एवं च तस्यैतस्येति संवत्सरात्मा महापुरुष उच्यते । आदित्यशब्दश्च रूढ्या मण्डलं तदभिमानिजीवं वाऽऽहेति तदेव रसशब्देनाधारत्वेनोच्यते , आदित्यशब्दात् " दित्यदित्यादित्यपत्युत्तरपदाण्ण्य" इति ण्यप्रत्ययान्तत्वमाश्रित्यादित्यान्तर्वर्तिवाचित्वे रूढिहानेः, " यश्चासावादित्य " इत्यनेन वैरूप्याच्च । ' स यश्चायमशरीर ' इत्यनन्तरवाक्ये शरीरात्मरसत्वेनास्मिन्नेव प्रकरणे पूर्वोक्तोऽनूद्यते । पुरुषद्वयव्यवधानात्तच्छब्दःएतत्प्रकरणस्थत्वादयमिति यश्चासावादित्यइति वाक्येनन्तरोक्तो महापुरुषोऽसाविति प्रत्यक्षतया निर्दिश्यते । उत्तरत्र " एतं ह्येव बह्वृचा" इत्येतच्छब्देन संवत्सरत्वेनादित्यान्तर्वर्तितया प्राज्ञतया चोक्तो महापुरुष एव परामृश्यते । महापुरुषशब्दश्च " महादेवं वा महापुरुषं वार्चयेत् , अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः " इति बोधायनादिप्रयोगात् " महापुरुषशब्दं च बिभर्त्येष सनातन " इति नारायणोपाख्यानादिगतद्वैपायनादिवचनाच्च नारायणवाचकत्वेन सिद्धः । इयं चैतरेयश्रुतिः पाद्मे पुराणे उपबृंहिता वत्सापहारानन्तरं ब्रह्मस्तोत्रे— ' त्वं वेदपुरुषो ब्रह्मन्महापुरुष एवच । शारीरपुरुषस्त्वंस्याच्छन्दः पुरुष एवच । चत्वारः पुरुषास्त्वं हि त्वमेव पुरुषोत्तमः ' इत्यारभ्य, 'उक्थे महति मीमांस्यमेतद्ब्रह्म प्रचक्षते ' इति । तथानुशासनिकेच ' तमध्वरे शंसितारस्तुवन्ति रथन्तरेसामगाश्च स्तुवन्ति । तस्मै हविरध्वर्यवः कल्पयन्ते स पौराणीं ब्रह्म गुहां प्रविष्टः' इति। अत्र ' एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त' इत्यादिवाक्यमुपबृंहितम् । बृहदारण्यके च ' इद्धो वै नामैष योयं दक्षिणेक्षन् पुरुषस्तं वा एतमिद्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्ष

प्रिया इव हि देवाः प्रत्यक्षद्विषः अथैतद्वामेक्षिणि पुरुषरूपमेषास्य पत्नी विराट्तयोरेष संस्तावो य एषोन्तर्हृदय आकाश" इति । इह चोक्तमिन्द्रशब्देन परोक्षाभिधानं 'राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी' ति काठके श्रीदेव्यामिन्द्रपत्नीति प्रयोगात् भगवतो विष्णोरेवेति गम्यते । भूसूक्ते च 'विष्णुपत्नीं महीं देवी' मितिवच्च 'नमाम्यच्युतवल्लभा' मितिवच्च 'इन्द्रपत्नी व्यापिनी' ति भूम्यां प्रयोगाच्चावगम्यते । 'तयोरेष संस्ताव' इत्यक्ष्यन्तर्वर्तिनो हृदयाकाशान्तर्वर्तित्वं श्रूयते । हृदयाकाशान्तर्वर्तिनश्चादित्यान्तर्वर्तित्वं 'स यश्चायं पुरुष' इति वाक्यान्निर्णीतम् । एतद्बलादपि भगवत एवादित्यान्तर्वर्तित्वं सिद्धम् ।

किञ्च 'आदित्यमण्डलासीनं रुक्माभं पुरुषं परम् । ध्यायन् जपेत्तदित्येतन्निष्कामो मुच्यते द्विजः ॥' 'आदित्यमण्डलान्तस्स्थं परं ब्रह्माधिदैवतम् । छन्दोनिवृत्त्याद्गायत्री मया दृष्टा सनातनी ॥' इत्यादि स्मृतिवचनैरादित्यान्तर्वर्ति परं ब्रह्म गायत्रीप्रतिपाद्यमिति तावदवसीयते । तथाहि—गायत्रीमन्त्रार्थतया स्मृतिवचनैः प्रतिपाद्यमानं परं ब्रह्म भगवानेव, तस्यैव परब्रह्मत्वात्; "नारायणपरं ब्रह्म" "नारायणः परंब्रह्म" "सर्वभूतस्थमेकं नारायणं कारणरूपमकारं परं ब्रह्मो"मित्यादिश्रुतेः । "ऋतं सत्यं परं ब्रह्मे" ति मन्त्रश्च भगवत्परतया व्यवस्थापितः । किञ्च सवितृशब्दः सहस्रनामसु भगवन्नामतया पठ्यते 'सविता रविलोचन' इति । किञ्च मैत्रायणीयोपनिषदि 'हिरण्मयेन पात्रेणे' ति पूर्वोक्तमन्त्रेणादित्यान्तर्वर्ती विष्णुदर्शनप्रतिबन्धकनिवृत्तिप्रार्थनानन्तरमाम्नायते "यदादित्यस्य मध्येऽक्षिण्यग्नौ चैतत् ब्रह्मैतदमृतमेतत् भर्गएतत्सत्यं धर्मइति यदादित्यस्य मध्य उदुत्वा मयूखे भगवत एतत्सवितुर्वरेण्यं सत्यधर्म एतद्यजुरेतत् तप एतत्तप एतदग्निरेतद्वायुरेतत्प्राण एतदपान एतच्छुक्रमेतदमृतमेतत्ब्रह्मविषयमेतत् भानुवर्णस्तास्मिन्नेव यजमानास्सैन्धवघन इव लीयन्त्येषा वै ब्रह्मैकता अत्र हि सर्वे कामास्समाहिता" इति च भर्गशब्दस्य वरेण्यशब्दस्य च

सवितृसम्बन्धित्वादसङ्कोचेन धर्मादिगोचरधीप्रचोदकत्वस्मृत्या च सकलधी प्रचोदकस्य सवितुश्चाक्षुषज्ञानसहकारिभूतप्रसिद्धसवितुरन्यत्वेन परमात्म तया तद्विग्रहपरत्वौचित्येन ब्रह्मादिशब्दास्तत्परा एव । अतएव ब्रह्म विषयत्वं भानुवर्णत्वञ्चोक्तम् । तलवकारिणां श्रुतौ सावित्रीविषये "कस्स-विता का सावित्री' ति खण्डे- 'तस्या एष तृतीयस्स्वर्धियो यो नः प्रचोद यादिति, यज्ञो वै प्रचोदयती' ति प्रचोदयिता यज्ञ इति व्याख्यातम् । यज्ञशब्दश्च 'यज्ञो वै विष्णु' रिति श्रुतेः 'यज्ञेन यज्ञमयजन्ते' त्यादि प्रयोगात्, 'पुरुषो यज्ञ इत्येतद्यत्परं परिकीर्तितम्' इति मात्स्योक्तेः, 'यज्ञा याचरतः कर्म' 'कर्मग्रन्थिर्विलीयत' इति गीतादिप्रयोगात्, कर्मणोऽचेत-नस्य प्रेरकत्वादित्यान्तर्वर्तित्वानुपपत्तेश्च विष्णुपरः । एवं बृहदारण्यके सप्तमप्रपाठके—'भूमिरन्तरिक्षं द्यौ' रित्यादिना गायत्र्याः पादत्रयं तुरीय ञ्चाभिधाय 'गायत्र्येतस्मिंस्तुरीये दर्शिते तुरीये पदे परोरजसि प्रतिष्ठिते' ति चतुर्थपादात्मकपरोरजश्शब्दवाच्ये 'एष वा व स परोरजाः इति हो वाच एष तपती" ति काठकश्रुत्या सूर्यान्तर्वर्तिपुरुषतया निर्णीते वस्तुनि प्रतिष्ठितत्वमुक्त्वा, पुनश्च गायत्रीमहिमानमभिधाय, आदित्यान्तर्वर्तिपुरुष दर्शनप्रार्थनामन्त्र आम्नातः – "हिरण्मयेन पात्रेण" त्यादिः । स च मैत्रायणीयश्रुतौ— "सत्यधर्माय विष्णव" इति पाठाद्विष्णुविषय इत्युक्तम् । परोरजस्त्वञ्च 'लोका रजांस्युच्यन्त' इति यास्कनिरुक्त्य नुसारात् सर्वलोकेभ्य उपरिस्थितत्वं रजोगुणकप्रकृतिमण्डलोत्तीर्णत्वं वा 'क्षयन्तमस्य रजसः पराक' इति विष्णाववगमितं गायत्रीप्रतिष्ठा भूतस्य विष्णुत्वे लिङ्गम् । भागवते भरतचरिते गायत्री तद्विषयक बृहदाण्यकश्रुतिरन्याश्च भगवद्वासुदेवपरतयोपबृंहिताः- "भगवन्तं हिरण्मयं पुरुषं उज्जिहाने सूर्यमण्डले प्युपतिष्ठन्नेतदुवाच परोरजास्सवितुर्जात वेदा देवस्य भर्गो मनसेदं जजाने' ति । अत्र 'एष वा व स परोरजा इति होवाच एष तपती' ति काठकश्रुतिं 'उदुत्यं जातवेदस'

मिति श्रुतिं, उक्तबृहदारण्यकश्रुतिं, ' य एषोन्तरादित्ये हिरण्मयः पुरुषः ' इत्यादितैत्तिरीयछान्दोग्यश्रुतिश्चाभिप्रेत्य ' परोरजा जातवेदा हिरण्मयं पुरुष ' मित्युक्तम् । योगयाज्ञवल्क्ये — 'ईश्वरं पुरुषाख्यन्तु सत्यधर्माणमच्युतम् । भर्गाख्यं विष्णुसंज्ञन्तु ज्ञात्वाऽमृतमुपाश्नुते'' इति । गायत्रीव्याख्यानावसरे च " सवितुस्तद्वरेण्यन्तु सत्यधर्माणमीश्वरम् । हिरण्यवर्णं पुरुषं व्योम तद्विष्णुसंज्ञित " मिति । सनकस्मृतौ— " रश्मिज्वालासहस्राढ्यं मण्डलं विपुलं रवेः । तदन्तश्शीतलाभन्तु सौम्यं सोमस्य मण्डलम्॥ स्फुरत्स्फुलिङ्गमनलज्वालामालासहस्रकम् । तस्य मध्ये सुखासीनं तप्तहाटकसन्निभम् । चतुरङ्गुलमात्रन्तु शुकपत्रनिभाम्बरम् । रक्तनेत्राम्बरं रक्तपाणिपादनखांशुकम् । शङ्खचक्रगदापाणिं श्रीवत्साङ्कितवक्षसम्। एवं ध्यात्वा जपेन्मन्त्रं सावित्रीं नियतश्शुचिः॥''इति। संवर्तस्मृतौ च— " आदित्यमण्डलान्तस्थं रुक्माभं पुरुषं परम् । ध्यायन् जपेत्तदित्येतान्निष्कामो मुच्यते द्विजः ॥ " इति । आग्नेयपुराणे नवमे ऽध्याये- " ध्यानं यथाग्निना प्रोक्तं सन्ध्यायाश्च मरीचये । तत्तेऽर्थतः प्रवक्ष्यामि द्विजानां हितकाम्यया ॥ सन्ध्ये द्वे संस्थितस्सूर्यस्सूर्यमध्ये स्थितश्शशी । चन्द्रमध्ये हुताशस्तु सर्वतेजोमयो हरिः ॥ अङ्गुष्ठमात्रः पुरुषस्सूर्यमध्ये मयोदितः । शङ्करेण तथा ऽदृश्यस्तत्प्रकाशोऽतितेजसा ॥ स विष्णुर्भुवनाधारो यस्येदं सकलं जगत् ॥ वरेण्यं च तत्सवितुर्भर्गो यो भगवान् गिराम् । धीशब्दवाच्यां ब्रह्मा च प्रचोदयति सर्वदा । सृष्ट्यर्थं भगवान्विष्णुस्सविता स तु कीर्तितः । सर्वलोकप्रसवनात् सावित्री सा तु कीर्त्यते ॥ " इति । एवं श्रुतिस्मृतिभिः गायत्र्या भगवत्परत्वे निश्चिते सति यद्यापातत एतद्विरुद्धार्थं किञ्चिदुपलभ्येत तदा तदेतदेतदनुगुणतयैव कथञ्चिन्नेयम् । एवं चायं गायत्र्यर्थः— नो धियो यः प्रचोदयात तस्य सवितुर्देवस्य तत्प्रसिद्धं वरेण्यं भर्गस्तेजोमयं रूपं धीमहीति । तथा चागस्त्यः- " यो देवस्सवितास्माकं धियो धर्मादिगोचराः । प्रेरयेत्तस्य यद्भर्गस्तद्वरेण्यमुपास्महे॥ " इति ।

ननु- सवितुर्वरेण्यमित्यन्वयः, अव्यवधानात्, 'तदक्षरं तत्सवितुर्वरेण्य' मित्यत्र तथा दर्शनाच्च; अतः कर्तरिषष्ठी, भर्गशब्दश्चाकारान्तः, तलवकारिणां श्रुतौ 'तस्या एष द्वितीयः पादो भर्गमय' इत्युपादानात्; मैत्रायणीयश्रुतौ - 'सविता वै देवो योऽस्य भर्गाख्यस्तं चिन्तयामी' तिदर्शनात्; 'आदित्यान्तर्गतं यच्च भर्गाख्यं वै मुमुक्षुभि' रिति योगयाज्ञवल्क्योक्तेश्च; भर्गशब्दश्च रुद्रे रूढो धीमहीत्यनेनान्वेति 'सुपां सुलुगि' त्यादिना स्वादेशेन द्वितीयान्तः, व्यत्ययेन प्रथमान्तो वा; तदिति च ब्रह्मवाचि, 'तदिति वा एतस्य महतो भूतस्य नाम भवती' त्यैतरेयश्रुतेः; एवञ्च देवस्य सवितुर्वरेण्यं तेजःप्रदत्वेन समाश्रयणीयं भर्गं ध्यायामः, यो भर्गो नो धियः प्रचोदयादित्यर्थः; उत्तरवाक्यगतत्वाद्यच्छब्दस्तच्छब्दानपेक्ष इति।तन्न,प्रधानभूतभर्गशब्दान्वयसम्भवे उपसर्जनवरेण्यशब्दान्वयायोगात्, विशेषणस्याव्यवधायकत्वाच्च । किञ्च सवितुरिति देवविशेषणम्, व्यावर्तकत्वात्, ततश्च देवस्येत्यनेनैव वरेण्यशब्दस्य भर्गशब्दस्य वा अन्वयो वाच्यः, देवस्येत्यनेन च भर्गशब्दस्यैवाव्यवधानमिति तस्यैव तेनान्वयो वाच्यः । यस्सवितेत्यनुक्त्वा यो देव इति वदन्नगस्त्योपीममेवार्थमाह । नच वरेण्यशब्दस्य वरणीयार्थकस्य प्रतिसम्बन्ध्यपेक्षत्वात्तेनैव सवितृशब्दस्यान्वयो युक्त इति वाच्यम्, वरेण्यशब्दस्य श्लाघ्ये रूढतया यौगिकार्थस्यानादेयत्वात् । ननु स्मृतिसिद्धस्य आदित्यान्तर्वर्ति परं ब्रह्म गायत्र्या दैवतमित्यस्यार्थस्य सिद्ध्ये सवितृशब्दो रविपरो वाच्यः, अतो वरेण्यशब्दो वरणीयार्थकस्सन् तदन्वय्येव युक्त इति चेन्न;- सवितृशब्दस्य रविपरत्वेपि भर्गशब्देन तेजोवाचिना परमात्मपरेणान्वयसम्भवेन वरेण्यशब्दे रूढिपरित्यागे हेत्वभावात् । सवितृवरणीयत्वार्थाङ्गीकारेपि बहिष्ठस्यैव सतस्समाश्रयणीयत्वसम्भवेन तेन मण्डलवर्तित्वालाभाच्च । तल्लाभस्तु प्रसिद्धिपरेण तच्छब्देनेति मन्त्ररहस्यविदः । नच 'तदक्षरं तत्सवितु-

वरेण्य' मिति श्रुत्यनुसारात्तथान्वयः; तत्र किं प्रकृतशिवापेक्षया वरेण्य-मिति निर्देशः, किंवा गायत्रीस्थभर्गश्शब्दापेक्षया? नोभयथापि नपुंसकोपपत्तिः। नच तत्पदस्य ब्रह्मपरत्वाद्भर्गशब्दस्य च तद्विशेषणत्वात्तत्पदापेक्षया नपुंसकोपपत्तिरिति वाच्यम्, य इति पुलिङ्गनिर्देशानुपपत्तेः। अतो गायत्रीस्थवरेण्यशब्दस्य द्वितीयान्तस्य भर्गसो विशेषणस्य नपुंसकस्यायं विपरिणामेन प्रथमान्ततया निर्देश इत्यास्थेयतया अनेन वाक्येन गायत्र्यां सकारान्तभर्गश्शब्दसिद्ध्या घट्टकुटी प्रभातम्। ततश्च सवितुर्वरेण्येन भर्गसा वान्वयेन किंचिदपि बाधकम्। अथापि "सविता वै देवः योस्य भर्गाख्यस्तं चिन्तयामी" ति मैत्रायणीय श्रुत्या सवितुर्देवस्य भर्गसान्वयस्य दर्शितत्वात्तथैवान्वयः, तस्याः श्रुतेः गायत्र्यर्थपरतया तच्छेषत्वात्! इदन्तु वाक्यं न तत्परम्, किन्तु प्रकृत शिवस्योत्कर्षप्रतिपादनाय गायत्रीप्रतिपाद्यार्थयोगपरम्। तस्माद्भर्गसो विशेष्यपदस्य पुरोवादप्रसिद्धस्यानिर्देशेन विशेष्यविवक्षयैव विशेषणपदप्रयोगः कृतः। यथा—"बुद्धेरात्मा महान्पर" इति महत्त्वविशिष्टे आत्मन्युक्ते, "महतः परमव्यक्तमिती" ति मन्तव्यम्।

एतेन "तां सवितुर्वरेण्यस्य चित्रा" मिति मन्त्रोपि व्याख्यातः॥ एवं परोदाहृतवाक्येनैव सकारान्तत्वं सिद्धम्। अत एव मैत्रायणीयश्रुतौ "यदादित्यस्य मध्य उदुत्वा मयूखे भगवत एतत्सवितुर्वरेण्यमेतदमृतमेत द्भर्ग" इति च नपुंसकलिंगेन निर्देशः; यदिति व्याख्येयगायत्रीस्थभर्गश्शब्दलिंगग्रहणौचित्याच्च, "भर्गस्तद्वरेण्यमुपास्महे" इत्याद्युदाहृतस्मृतेश्च। नच तलवकारिणां "भर्गमय" इति श्रुतेरकारान्तत्वावगमः, उपक्रमे प्रथमपादार्थकथने "अग्निर्वै वरेण्यं आपो वै वरेण्यं चन्द्रमा वै वरेण्य" मिति त्रिष्वपि नपुंसकैकवचननिर्देशेन गायत्रीस्थवरेण्यशब्दस्य नपुंसकतावगमात्; तन्निर्देशस्य व्याख्येयानुरोधित्वात्; अन्यथाग्न्यादिशब्दानुरोधे नानालिङ्गवचननिर्देशापत्तेः। गायत्र्यां च वरेण्यशब्दस्य विशेष्यलिंगत्वात्

भेदावश्यम्भावेन गुणात् भेद एव । न ह्यत्र धात्वर्थाविवक्षावद्भावनाया अपि अविवक्षामंगीकृत्य गुणफलयोरेव मिथोऽन्वयो वक्तुं युक्तः, कारकान्वयस्याप्यनुपपन्नत्वात् । अतो भावना भिन्नैव । सकृदनुष्ठानेपि सान्नाय्यादिवत् तत्तज्जात्यवच्छिन्नव्यक्तिद्वयोत्पत्त्यंगीकारान्नैकव्यक्त्याश्रितजातिद्वयांगीकारापत्तिः । अस्तु वा तत्, तथापि न सांकर्यम्, होमविधिविधेयतावच्छेदकजातेर्गुणविधिविधेयतावच्छेदकजातिव्यतिरेकेण सत्त्वेपि तस्याः तद्व्यतिरेकेणान्यत्रासत्त्वात् । व्यक्तिभेदपक्षे तु यत्नद्वयस्याप्यवच्छेदकीभूतो धात्वर्थ एक एव, प्रमाणबलेन चैकस्य धात्वर्थस्य युगपदुत्पद्यमानयत्नद्वयजन्यतापि आपद्यमाना न विरुध्यते ।

तस्मादत्र दधिकरणकमिन्द्रियकर्मकं भावनान्तरमेव विधीयत इति सिद्धम् । अपूर्वन्तु दधिजन्यमेकमिन्द्रियजनकं होमजन्यं च स्वर्गादिजनकमपरम्, अपूर्वस्य शक्तिरूपत्वेन शक्तिमद्भेदे भेदस्यावश्यकत्वात । आश्रयस्य प्रणयनादेः दृष्टविधया स्वकार्योपयोगे तु गुणजन्यमेव पश्वादिजनकं नत्विन्द्रियाद्यनुकूलं होमजन्यमपरम्, होमस्योत्तरक्षण एव दधिनिष्ठकरणतासम्पादकत्वेनापूर्वाजनकत्वात् । यदि ह्याश्रयत्व भावनान्तरव्यापारत्वमुच्येत, ततः क्षणिकस्य होमस्येन्द्रियजनकत्वायोगात् तदनुकूलमप्यपूर्वं कल्प्येत । नतु तत्त्वे प्रमाणमस्ति, करणविधेः तज्जन्यत्वमात्रेणाप्युपपत्तेः तज्जन्यजनकत्वस्यापि कल्पने गौरवात् । अतो गुणफलसम्बन्धस्थले भावनाभेदात् गुणजन्यमप्यपूर्वं भिन्नमेव ।

भावनान्तरस्य चेतिकर्तव्यतापेक्षायां आश्रयतो धर्मातिदेशः । तथा हि- न तावदाश्रयस्यैव प्रकरणादितिकर्तव्यतात्वेनापि ग्रहणं शंक्यम्, वाक्येन स्वर्गादिसंयुक्तस्य होमस्य प्रकरणाविषयत्वात् । न चाङ्गत्वाभावेप्याश्रयस्य सतः प्रसङ्गेनेतिकर्तव्यताकांक्षानिवर्तकत्वोपपत्तेः नातिरिक्तेति-

कर्तव्यतासाकांक्षोपपत्तिरिति वाच्यम्, आश्रयस्य करणतानिर्वाहकत्वेन करण कोटावन्तर्भावात् तदनुग्राहकेतिकर्तव्यताया भेदेनैव अपेक्षितत्वात् । आश्रयाकांक्षा करणाकांक्षातो भिन्नेति मते आश्रयस्य करणकोटावनन्तर्भावेप्याश्रयस्य दृष्टविधया करणतासम्पादकस्यादृष्टार्थाया भावनाया अदृष्टोपायापेक्षत्वात् न तदुपकारकत्वं सम्भवतीति युक्तं तद्व्यतिरिक्तेतिकर्तव्यतापेक्षणम् । यद्यप्याश्रयान्तरकरणे फलानुत्पत्तेराश्रयनियमादृष्टस्याप्युत्पत्तेरावश्यकत्वात् तद्द्वारा तन्नियमस्येतिकर्तव्यतात्वमाशङ्क्येत, तथापि दध्यादिगुणसन्निपत्योपकारस्य क्रयसम्पादनादेरपेक्षितत्वात् आश्रयसमानविधानत्वस्य च संस्थाधिकरणे निषेत्स्यमानत्वात् युक्त आश्रयतो धर्मातिदेशः । नचैवमपि सादृश्याभावात्कथं कल्पितवचनातिदेशः? सादृश्यकार्यस्य प्रकृतिविशेषोपस्थापनस्य प्रकरणेनैवेह सिद्धेः तदनपेक्षणात् । यद्यपि च ये प्रकृतावाश्रयस्वरूपसिद्ध्यर्था देवतादयः तेषामिह गुणस्वरूपसिद्ध्यर्थत्वासम्भवात् बाध एव प्राप्नोति, तथापि तदन्येषामतिदेशः, ते त्वाश्रयसिद्ध्यर्थं क्रियमाणा अपि न गुण उपकुर्वन्ति । ननु येपि प्रकृतौ प्रधानद्वारा तदपूर्वसाधनीभूतद्रव्यसंस्कारार्थाज्वलनादयः तेपि कथं प्राकृतप्रणाडीरहिते गुणे प्राप्नुयुः? सत्यमेवं न प्राप्नुवन्ति, तथापि दध्यादौ क्रत्वर्थत्वस्यापि सत्त्वात् गोदोहनादेश्च नित्यचमसस्थानत्वात् स्थानापत्तिरूपातिदेशेन प्रणयनानङ्गभूतेपि प्रणयनोपकारके गोदोहने धर्माः प्राप्नुवन्त्येव । परन्तु ते प्रणयनादिकार्यप्रयुक्ता एव, नतु गुणापूर्वप्रयुक्ताः । गुणस्यापि त्वपेक्षिताः केचित्सम्पादनप्रक्षालनादयः प्रसङ्गादुपकुर्वन्ति, अन्ये त्वारादुपकारका जपोपस्थानादयो गुणभावनायामतिदेशेन प्राप्नुवन्ति । तत्रापि तज्जन्या उपकारा एवातिदिश्यन्ते, नतु तज्जनकीभूताः पदार्था अपि, गुणस्य स्वर्गादिप्रयुक्ताश्रयोपजीवित्वेन तत्तन्त्रमध्यपातावगमात् प्रसङ्गेन तदर्थानुष्ठिताङ्गजन्योपकारलाभोपपत्तेः

स्वातन्त्र्येण जनकानपेक्षत्वस्य द्वादशे वक्ष्यमाणत्वात् । अत एव गोदोहनादेः दर्शपूर्णमासापूर्वप्रयुक्तप्रणयनाद्युपजीवित्वात् सौर्यादावनतिदेश इति वक्ष्यते । आश्रयाननुष्ठापकत्वं स्वाश्रयस्यानङ्गत्वात् वत्सानुष्ठापका-न्तरयुक्तत्वाच्च स्पष्टमेव । तस्मात् सिद्धं गुणादेव फलमिति । प्रयोजनं आद्यपक्षे दध्यपचारे प्रतिनिध्युपादानमारम्भोत्तरम्, ततः प्राक् दध्य भावे अनारम्भ एव; द्वितीयपक्षे यद्यपि "हवा एतद्यज्ञश्छिद्यते यदन्यस्य तन्त्रे प्रतते अन्यस्य तन्त्रं प्रतायत" इति वचनादेकप्रयोगमध्येऽपरस्य कामस्य प्रयोगः सामान्यतो निषिद्धः, तथापि द्वयोरनयोरग्निहोत्रकर्मा न्तरयोरेककालत्वात्तन्त्रप्रयोगापत्तेः सङ्कल्पादौ तत्तत्फलार्थं कर्मद्वयमपि तन्त्रेण करिष्य इत्युल्लेखः प्रयोजनम् । गोदोहनोदाहरणे तु प्रयोगात् बहिः प्रणयनानुष्ठानम् ।

यत्तु वार्तिके प्रणयतीत्यस्य कर्मसाकांक्षत्वात् "अपः प्रणयती" ति वाक्यान्तरश्रुतद्वितीयान्ताप्पदानुषङ्गावगतेरपां चोपयोगसत्त्वेन तत्संस्कारा-र्थस्यैव प्रणयनस्य फलार्थत्वावगमात् परप्रयुक्तसंस्कार्योपजीवित्वेन पक्ष द्वयेपि क्रतुप्रयोगमध्यकरणोपपत्तेः नानुष्ठाने भेदो लभ्यत इत्युक्तम्; तद नुषक्तस्याप्यपःपदस्य संस्कार्यपरत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेः सक्तु न्यायेन विनियोगभङ्गावसायाल्लौकिकाप्साधनकप्रणनयनस्य पश्वर्थत्वावगते रतिशयार्थम् ।

सिद्धान्ते तु तत्तत्फलार्थेन गुणेन सहाश्रयं स्वफलार्थं करिष्य इत्यु ल्लेखः प्रयोजनं द्रष्टव्यम् ।

सूत्रन्तु— यागादिवाक्यस्य दध्यादिवाक्यस्य च भावार्थाधिकरण प्रवृत्त्यप्रवृत्तिभ्यां तुल्यत्वाभावात् तस्याश्रयस्य फलसम्बन्धिनि गुण एव दध्यादिवाक्यस्थफलं प्रतीयेतेति योज्यम् ।

इतीन्द्रियकामाधिकरणम् ॥११॥

———(*)———

## अथ रेवत्यधिकरणम् ॥

### समेषु कर्मयुक्तं स्यात् ॥२—२—२६॥

ज्योतिष्टोमप्रकृतिको ऽग्निष्टुद्यागः समाम्नातः- " त्रिवृदग्निष्टुदग्निष्टोमः तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेते " ति । अत्र च प्रथमान्तत्रयस्य यजेतेत्यनेनान्वयात् कर्तव्यपदाध्याहारेण भिन्नवाक्यत्वं तावदावश्यकम् । तत्र च त्रिवृत्पदन्तावदातिदेशिकचतुस्तोमत्वव्यावृत्तिफलकतया सर्वस्तोत्रेषु त्रिवृत्स्तोमविधायकम् । अग्निष्टुत्पदमाग्नेयीषु स्तुवत इति वचनादग्निदेवत्यमन्त्रसाध्यस्तोत्राङ्गकत्वात् तत्प्रख्यन्यायेन नामधेयम् । अग्निष्टोमपदं चाग्निष्टोमसंस्थाकत्वप्रतिप्रसवार्थम् । यद्यपि हि ज्योतिष्टोमात् नियतमेवाग्निष्टोमसंस्था नित्यत्वात् प्राप्यते, तथाप्येतत्पूर्वभावियागस्योक्थ्यसंस्थाकस्य निकायिस्वेन एतद्यागप्रकृतित्वात्रायात् ततः उक्थ्यसंस्थाया एव प्राप्स्यमानत्वेन प्रतिप्रसवत्वोपपत्तिः । राजन्यनिमित्तकाग्निष्टोमसंस्थाविकारभूतात्यग्निष्टोमताव्यावृत्तिफलकोवायं सर्वसाधारण्येनाग्निष्टोमसंस्थाविधिरिति द्रष्टव्यम् । गुणद्वयविशिष्टापूर्वकर्मविधानाच्च न वाक्यभेदः । तस्येति वाक्येन तु राजसूयन्यायेन वायव्यमन्त्रैकविंशस्तोमविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालतादिविशिष्टो यागप्रयोगः फलोद्देशेन विधीयते । तत्र वायव्यमन्त्राणामतिदेशप्राप्तमन्त्रबाधनाग्नेयीमन्त्रबाधेन वा निवेशः । यद्यपि चात्राग्निष्टोमसामपदसमभिव्याहारादाधारतासम्बन्धेन साम्नि मन्त्राणां विशेषणत्वं प्रतीयते, तथापि अक्लृप्तकार्यकल्पनापत्तेः न सामाङ्गत्वेन मन्त्रविधिः, किन्तु पाष्ठिकान्वयलभ्यं सामसम्बन्धमनूद्य विशेषणप्रधानमग्निष्टोमशब्दमंगीकृत्य स्तोत्रांगतयैव मन्त्रविधिः । एवमेकविंशस्तोमकताप्रतिप्रसवोपि तत्रैव । प्रकृतितो हि अग्निष्टोमस्तोत्र एकविंशस्तोमकत्वे प्राप्ते औपदेशिकेन त्रिवृत्सामान्यविधिना निवर्तमाने अयं

अतिप्रसवः । अतश्चोभयविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालादिविशिष्टयाग प्रयोगविधिरेवायम् । यद्यपि चाग्निष्टोमस्तोत्रभावनोत्तरकालाद्यतिदेशतः सम्भवत्प्राप्तिकम् , तथापि एकवाक्यत्वसिद्ध्यर्थं विशिष्टविधिसन्दंष्टन्याये न वाऽतिदेशप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा तस्य विधिर्नानुपपन्नः । यद्यपि चाग्निष्टोमस्तोत्रस्य प्रकृतौ सर्वान्त्यत्वान्न यागप्रयोगपूर्वकालत्वं सम्भवति, तथापि सर्वाङ्गानुष्ठानसौकर्यार्थमादितोऽवधारणादग्निष्टोमस्तोत्रस्यापि तत्सिद्धेः प्रतिपत्तिपूर्वकालत्वाभिप्रायेण तदिति मूलानुयायिनः । वस्तुतस्त्वेतादृशविषये मुखं व्यादाय स्वपितीति वत् समकालत्वमेव प्रयोगमध्यवृत्तित्वरूपं लक्षणया क्त्वाप्रत्ययार्थो विधीयते वाक्यभेदपरिहारार्थम् । अथवा अस्तु समानकर्तृकत्वमात्रमत्र तदर्थः, यद्यपि च ऋत्विक्कर्तृकस्तोत्रसमानकर्तृकत्वं यजमानकर्तृके यागे न सुलभम्, तथापि प्रयोजककर्तृत्वाभिप्रायेण तदुपपत्तेः न विरोधः; तत्प्रकरणे च " वारवन्तीयमग्निष्टोम कार्य " मिति श्रुतेन वाक्येन प्राकृतयज्ञायज्ञीयबाधेनाग्निष्टोमस्तोत्रे वारवन्तीयं विहितम् , तदनन्तरञ्चैतस्यैव " रेवतीषु वारवन्तीयमग्निष्टोसाम कृत्वा पशुकामो ह्येतेन यजेते " ति श्रुतम् । तत्र च पूर्ववदेव त्रेधा सन्देहः । पादाध्यायसङ्गती स्पष्टे । आपवादिकी त्वनन्तरा ।

तत्र प्रकृतप्रत्यभिज्ञानादेतच्छब्दश्रुतेः प्रमाणाभावाच्च न तावत्कर्मान्तरम् , सिद्धान्ते वक्ष्यमाणरीत्यैव चाश्रयाभावान्नापि गुणफलसम्बन्धः, अतो वायव्यवाक्यवदेव रेवतीमात्रविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालतादिविशिष्टो यागप्रयोगः फलार्थं विधीयते । न ह्यत्र दधिन्यायेन गुणस्योत्पत्तावन्वययोग्यत्वम् , अपि तु कालादिरूपत्वाद्राजसूयन्यायेन प्रयोगविशेषणत्वमेव, अतोऽत्र गुणविशिष्टस्य तस्यैव कर्मणः फलोद्देशेन विधानमित्येकः पक्षः । द्वितीयस्तु — नात्र राजसूयन्यायः, प्रयोगस्य

वायव्यवाक्येनैव प्राप्तत्वात् , फलान्तरश्रवणेपि च विविदिषावाक्यव द्विनियोगमात्रकरणेन प्रयोगान्तरस्याविधानोपपत्तेः; नच विनिगमना विरहः, प्राथम्येन वायव्यवाक्य एव प्रयोगविधे नियन्तुं शक्यत्वात् । एवं सत्यपि यदि विशेषणीभूतस्य रेवतीमात्रविशिष्टाग्निष्टोमस्तोत्रभाव नोत्तरकालतादेरप्राप्तिः स्यात् ततोऽवेष्टेः " यदि ब्राह्मणो यजेत " त्यादौ विधेयकर्तृकालादिरूपानेकगुणवशादिव प्रयोगान्तरमपि विधीयेत, न त्वेद दस्ति, तस्यापि वायव्यवाक्येनैव प्राप्तत्वात् , नह्यत्र ततः पूर्वप्रवृत्तिः शक्यते वक्तुम् , प्रापकस्यापि प्रत्यक्षत्वात् ; नच प्राप्तस्यापि विशिष्टविधि सन्दष्टन्यायेन विधेयतामापाद्य प्रयोगभेदकत्वम्, अन्योन्याश्रयापत्तेः– सति हि प्रयोगविधौ विशिष्टविधिसन्दष्टता, तस्यां च सत्यां विधेयत्वात् प्रयोगविधिरिति । अतः परिशेषाद्रेवतीमात्रं प्राप्ताग्निष्टोमस्तोत्रोत्पत्त्यनुवा देन विधेयम्– फलोद्देशेन यागविनियोगश्चेति वाक्यभेदतादवस्थ्यात् दधिन्यायेनात्र लाघवात् गुणफलसम्बन्धविधिरेव । तत्रापि रेवतीमात्र स्याप्राप्तत्वात् यद्यपि विधिः तन्मात्र एव सङ्क्रमते, तथापि नात्र तासां फलसम्बन्धः, तथात्वे तासां विधिलिङ्गसङ्कुचत्वादेतच्छब्देन तृतीया न्तेन फलसाधनतयोपादानानुपपत्तेः; किन्तु प्राप्तस्यापि रेवतीविशिष्टस्य वारवन्तीयस्यैव । यद्यपि चात्राप्यक्लृप्तकार्यकल्पनापत्तेः रेवतीनामग्नि ष्टोमस्तोत्र एवाङ्गत्वम् , तथापि पार्ष्ठिकान्वयलभ्याधारतासम्बन्धेनैव साम्नि रेवतीनां वैशिष्ट्यं नानुपपन्नम् । अत एवैतच्छब्दोपपत्तावपि नाग्नि ष्टोमस्तोत्रस्यैव रेवत्यङ्गस्य फलसम्बन्धः, अग्निष्टोमसामपदस्य विशे षणप्रधानत्वे लक्षणापत्तेः । नच रेवतीवारवन्तीययोः पृथक्पदोपात्त कारकत्वेन कथं वैशिष्ट्योपपत्तिः ? फलकर्मकभावनाया विधेयत्वेन तस्यामुभयोः प्रथमतः सम्बन्धाङ्गीकरणेन सोमादिवत् पश्चात् परस्पर वैशिष्ट्योपपत्तेः; कृत्वाशब्दश्रवणेन रेवतीषु कृत्वा वारवन्तीयं तेन फलं भावयेदित्यर्थावगमाद्वैशिष्ट्योपपत्तेश्च । अतो रेवतीविशिष्टस्य वारवन्ती

यस्य फलसम्बन्धः, तस्य च स्वरसमाहारात्मकस्य सौभरादिवत् सिद्ध रूपत्वेनाश्रयापेक्षायां प्राकृतस्य यागस्यैवाश्रयत्वम् ; नहि गायतिधातु वाच्यत्वात् साम्नः क्रियात्मकत्वाशङ्का, गडिवदनैकदेश इत्यादौ गण्डा दीनां धातुवाच्यत्वेपि सिद्धरूपत्ववत् । सामशब्दस्य " सामाथो यः कश्च रोषणः स्वर " इति श्रुतेः षड्जादिस्वरसमाहारवाचित्वात् - स्वर शब्दस्य च " मारुतन्तूरसि चरन्मन्द्रञ्जनयति स्वर " मित्यादि सङ्गीत शास्त्रपर्यालोचनया सिद्धरूपवायवीयसंयोगविभागजनितध्वन्यात्मकशब्दविशे षवाचित्वावगमेन वारवन्तीयादेः सिद्धरूपत्वप्रतीतेः । अतश्च तस्या श्रयापेक्षायां युक्तमेव यागस्याश्रयत्वम् । शक्यते हि साम्ना ऋगक्षरा भिव्यक्तिद्वारा स्तोत्रमिव यागः साधयितुम् । अतश्च सौभरसाम्नस्स्तोत्रा श्रितत्वमिव वारवन्तीयस्यापि यागाश्रितत्वं तदीययाज्यादिमात्राधारतया उच्चैष्ट्वादिवन्न विरुध्यते । रेवतीनामपि चात एव याज्यादिकार्ये निवेशोप्युन्नेयः । काम्येन च वारवन्तीयादिना सामान्यविधिप्राप्तस्य वातिदेशप्राप्तस्य वैकश्रुत्यादेर्बाधोऽपि सुवच एव । यद्वाग्निष्टोमसामेत्यनु वादानुपपत्तिराशङ्क्येत, ततोऽग्निष्टोमस्तोत्रद्वारैव यागस्य जन्यत्वापरपर्याय माश्रयत्वम् । इष्यत एव हि व्रीह्यादौ परम्परासम्बन्धेन जन्यत्वम्, आश्रयत्वमपि च सौभरादौ स्तोत्रादेः । अस्तु वा यागस्याग्निष्टोमस्तोत्र जन्यत्वात् परम्परासम्बन्धेन जन्यत्वापरपर्यायाश्रयत्वायोगेप्यानर्थक्यतदङ्ग न्यायेनाग्निष्टोमस्तोत्रेवतारः । इष्यते चोक्थ्यादिस्तोत्रनिरूपितसमाप्तिप्रति योगित्वरूपस्याश्रयत्वस्य साक्षात् प्रकृते यागे ऽसम्भवेन प्रयोगे चा वतारः " पशुकाम उक्थ्यं गृह्णीया " दित्यादौ । नच स्तोत्रान्तराणा मपि प्रकृतयागाङ्गत्वादग्निष्टोमस्तोत्र एवावतारे प्रमाणाभावः, अग्नि ष्टोमस्तोत्रस्य वायव्यवाक्ये विहितत्वेन वारवन्तीयवाक्येऽनुवादेन चाति

देशिकस्तोत्रान्तरापेक्षया विशिष्योपस्थितत्वात् शास्त्रस्याबाधपक्षपातित्वे न काम्यस्यापि बारवन्तीयस्य स्तोत्रान्तरे निवेशः। आतिदेशिकसाम बाधापत्तेः वारवन्तीयाङ्गकाग्निष्टोमस्तोत्रमात्रनिवेशावगमाच्च।

एतेन यत् सिद्धान्तवार्तिके "पुरुषार्थवारन्तीयस्य क्रत्वर्थेन सहाभेदाद्वाग्निष्टोमस्तोत्रवृत्तित्वं भवेत् क्रत्वर्थस्य तद्वृत्तिदर्शनेनात्राप्यनुमानाद्वा, एतस्य तत्स्थानापन्नत्वाद्वा? नाद्यः, एकस्य देवदत्तस्य युद्धभोजनादिकार्यभेदेन एकस्थानानियमवदेकस्थानत्वे प्रमाणाभावात्। न द्वितीयः, सामान्यतो दृष्टस्याप्रयोजकत्वात्; वारवन्तीयत्वहेतोराधानेऽनैकान्तिकत्वाच्च। अग्निष्टोमस्तोत्रवृत्तित्वस्य च साधनतापरपर्यायस्य सामप्रयोजनत्वेन सामानङ्गतया कार्यापत्त्याप्यनतिदेशान्न तृतीयोऽपि। अतो नाग्निष्टोमस्तोत्रमात्रवृत्तिता सम्भवती" त्युक्तम्, तदपि परास्तम्, अबाधेनोपपत्तौ बाधायोगादिति न्यायेनैव तदुपपत्तेः। यस्त्वस्मिन् पक्षे रेवतीभिर्वायव्याबाधः, स स्तोत्रान्तरेप्यातिदेशिकऋगन्तराबाधात्तुल्य इत्याकिञ्चित्करः। अतो युक्त एवानर्थक्यतदङ्गन्यायेनाग्निष्टोमस्तोत्रमात्रेऽवतारः। अस्तुवाऽग्निष्टोमस्तोत्रस्यैव विशिष्योपस्थित्यादिनाश्रयत्वम्, तस्य च धर्मिग्राहकप्रमाणेनाग्निष्टुद्यागसम्बन्धिन एव लाभाद्यजिः षष्ठ्यन्तैतच्छब्दः क्त्वाप्रत्ययश्च सर्वमनुवादः। अथवा बारवन्तीयमग्निष्टोम सामकार्यमिति प्राकरणिकवाक्येनैव लाघवादाश्रयसम्बन्धो विधीयते, न त्वङ्गाङ्गिसम्बन्धः, गौरवात्; दध्यादिवाक्येषु त्वन्यलभ्यत्वादाश्रयस्यागत्या गौरवाङ्गीकरणम्। तदेवं बारवन्तीयस्यैव फलसम्बन्ध इति मूलोक्तः पक्ष उपपादितः। अथवास्तु रेवतीनामप्रासङ्गात् तस्यैव

विधिसंक्रमणावगतेः तासामेव फलसम्बन्धः । सप्तमीचेयं यद्यपि स्तोत्र निरूपितं सामनिरूपितमेव वाऽधिकरणत्वं वदति, तथाप्येतच्छब्देन तृतीयान्तेन रेवतीविशिष्टवारवन्तीयस्यैव पूर्वोपस्थितस्य परामर्शात् तत्र च विशेष्यस्य प्राप्तत्वेनाविधेयत्वादप्राप्तरूपविशेषणस्यैव दाक्षायण यज्ञपदे आवृत्तेरिव फलसम्बन्धोपपत्तिः । अत एवैतच्छब्दस्यापि लिङ्ग संख्यत्वात्र रेवतीपरामर्शकत्वमित्यप्यपास्तम्, विशिष्टपरामर्शकत्वेना विरोधात् । नन्वेतस्मिन् पक्षे रेवतीनामग्निष्टोमस्तोत्रमात्रवृत्तित्वस्य पूर्वोक्तविधयाप्यलाभात् कथं गुणफलसम्बन्धोपपत्तिः, प्रकरणेन तदलाभेपि वाक्येनाश्रयलाभोपपत्तेः । तथाहि— दध्यादावपि सम्भवत्येव वाक्ये- नाश्रयविधिः । नच वाक्यभेदः, होमविशिष्टदध्नः फलोद्देशेन विधानोप पत्तेः । नचैवं होमस्य दध्यङ्गत्वापत्तिः, फलप्रयोजनत्वेनाङ्गतासम्बन्धेन वैशिष्ट्यानङ्गीकारात्; अपितु अपेक्षावशात् आश्रयतासम्बन्धेनैव । अतश्च यथैव "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यादौ न दर्शपूर्ण मासयोः सोमाङ्गत्वमुत्तरकालाङ्गत्वं वा, अपि तु निरूपकतासम्बन्धेनै वोत्तरकालतायां वैशिष्ट्यम्, तथात्राप्याश्रयतासम्बन्धेन तदङ्गीकारे न कश्चिद्विरोधः । स तु तत्र नाश्रितः, अन्यत एव लाभोपपत्तेः । प्रकृते तु प्रकरणेनाश्रयप्राप्तेरसम्भवात् वाक्येनैवाग्निष्टुद्यागवृत्त्यग्निष्टोमस्तोत्रसाधनी भूतरेवतीविधानाद्वाक्यभेदं विनैवाश्रयलाभोपपत्तिः । अथवा अग्निष्टोम स्तोत्रस्यैवाश्रयतासम्बन्धेन वैशिष्ट्यम्, तस्य तु प्रकरणात् प्रणयनादे रिवाग्निष्टुद्यागसम्बन्धिन एवोपस्थितेष्षष्ठ्यन्तैतच्छब्दो यजिश्च वारवन्तीय पदवदनुवादः । किञ्चास्मिन् पक्षे यथैव सिद्धान्ते रेवत्यादिविशिष्टस्तोत्र भावनाविशिष्टयागविधानं कृत्वाशब्दमहिम्ना न दुष्यति, तथैव ममा प्याश्रयभावनाविशिष्टगुणभावनाविधानमिति सर्वथाश्रयप्राप्तेस्सत्त्वात् फल सम्बन्धविधिरेव युक्तः ।

इति प्राप्तेऽभिधीयते— नात्र गुणात् फलम्, आश्रयालाभात् । तथाहि— वारवन्तीयस्य फलसम्बन्धित्वपक्षे तावन्नाश्रयलाभः, स हि प्रकरणादभिप्रेतो वाक्याद्वा? आद्येपि किं यागस्यैवाश्रयत्वम्, अग्निष्टोम स्तोत्रस्य वा? तत्रापि किं यागस्य साक्षात् अग्निष्टोमस्तोत्रद्वारा वा? नाद्यः, अग्निष्टोमसामेत्यस्यानुवादानुपपत्तेः । न द्वितीयः, स्तोत्रस्यादृष्टविधया यागाङ्गत्वात् तद्द्वारा यागस्याश्रयत्वानुपपत्तेः । दृष्टविधया हि कृति साध्यधात्वर्थसम्बन्धित्वं गुणस्यापेक्षितमित्युक्तं पूर्वाधिकरणे । अदृष्टद्वारा हि तदाश्रयणे गुणस्याश्रयं विनापि फलकरणत्वस्यादृष्टद्वारोपपत्तेः कुत माश्रयाकांक्षया । न चेष्टापत्तिः, करणविधिवैयर्थ्यापत्तेरुक्तत्वात् । नचैव मपि पूर्वकालतादिरूपदृष्टसम्बन्धेनैवाग्निष्टोमस्तोत्रस्य द्वारत्वोपपत्तेः युक्तमेव परम्परया यागस्याश्रयत्वमिति वाच्यम्, एवमपि यागस्यैव तदीयत्रङ्गा धारत्वेनाश्रयत्वोपपत्तेः । स्तोत्रद्वारकपरम्परायामेव प्रमाणाभावात् । न चाग्नि- ष्टोमसामेत्यनुवादानुपपत्तिः प्रमाणम्, तथात्वे तस्यापि तत्र तात्पर्यकल्प नेन वाक्यभेदस्यापरिहार्यत्वात् । किञ्चास्तु वा यागस्य साक्षात्सामाश्रयत्व योग्यत्वम्, तथाप्यग्निष्टोमस्तोत्रस्यैव द्वारत्वनिवेशे किं मानम्? तस्यौ पदेशिक्युपस्थितिरितिचेत्? तस्या द्वारत्वाभावसाधकत्वेन विरुद्धत्वात् । न ह्यातिदेशिकस्तोत्रवृत्तिऋग्बाधसम्भवे औपदेशिकस्तोत्रवृत्त्यौपदेशिकवाय व्यबाधो रेवतीभिर्युक्तः । तस्मादौपदेशिकत्वस्य द्वारत्वासाधकत्वादग्नि ष्टोमस्तोत्रस्यैव न द्वारत्वे प्रमाणमस्ति ।

एतेन तस्यैव विशिष्योपस्थितेः साक्षादाश्रयत्वं यागे, आनर्थक्येन वा तत्रैवावतरणं प्रयुक्तम् । किंच नायमानर्थक्यतदङ्गन्यायस्य विषयः, सर्वत्र हि श्रुतशब्दजन्यशाब्दबोधे योग्यताज्ञानाभावेप्ययोग्यतानिश्चयाभाव मात्रेण शाब्दबोधस्यानुभाविकत्वात् तन्निश्चयः प्रतिबन्धकमात्रम् । अतश्च "सप्तदशारत्निर्वाजपेयस्य" त्यादौ श्रुतषष्ठ्या अयोग्यतानिश्चयाभावमात्रेण

शाब्दबोधे जाते पश्चाद्योग्यतालोचनादशायां साक्षादसम्भवेऽप्युक्तपरम्परा-श्रयणम् । यत्र तु कल्पितशब्देन शाब्दबोधः, तत्र शब्दकल्पनायां योग्य-ताज्ञानस्यैव कारणत्वम् , अयोग्यतानिश्चयाभावसत्त्वेऽपि योग्यताज्ञानाभावे शब्दकल्पनानुदयस्यानुभविकत्वात् । अतश्च यागगतयोग्यताज्ञानाभावेन तद्गताश्रयत्वबोधकशब्दस्यैव प्रकरणेनाकल्पनात् कुतः तदसम्भवे अङ्गे-ष्ववतारः ।

यत्तु — प्रकरणेनाश्रयलाभाभावेऽपि बारवन्तीयवाक्येनैव तल्लाभोप पत्तिरित्युक्तम् । तन्न, तथात्वे ऽग्निष्टुद्यागमात्रवृत्त्यग्निष्टोमस्तोत्रस्यैवाश्रयत्वे प्रमाणाभावात् । न ह्यग्निष्टोमपदस्याविशेषप्रवृत्तस्यानपेक्षत्वे सति अधि काराख्यप्रकरणमात्रेण सङ्कोचो युक्तः, 'तुल्येषु नाधिकारस्स्या' दिति न्यायात् । यद्यपि प्रयुक्तिशक्तिकल्पनागौरवपरिहारार्थं क्रतुप्रयोगवृत्तित्व मग्निष्टोमस्तोत्रस्यापेक्ष्यते, तथापि क्रत्वन्तरप्रयोगवृत्तित्वस्यापि सम्भवात् नाधिकारेण संकोचः । ननु नेदं कुशकाशावलम्बनं युज्यते, गुणविधेः प्रयुक्तिशक्तिकल्पनापरिहारार्थं प्रणयनादेरिवाग्निष्टोमस्तोत्रस्यापि प्रयोजका-न्तरापेक्षायां युज्यत एव प्रकृतक्रत्वधिकारस्य संकोचकत्वम् , अत एव यदपि वार्तिके बारवन्तीयवाक्यस्य गुणफलवाक्यस्य च द्वयोरपि यागोत्पत्ति वाक्येनैवान्वयात् परस्परान्वयाभावेन न बारवन्तीयवाक्यस्याश्रयसमर्पकत्वं युज्यत इति समाहितम् , तदप्यपेक्षावशेन व्यूढाद्युत्पत्तिवाक्यवत् बारव-न्तीयवाक्यस्यापि गुणफलवाक्यैकवाक्यतयाश्रयसमर्पकत्वोपपत्तेरकिंचित्करम्; यदपि च प्राकरणिकाश्रयपक्षे अग्निष्टोमस्तोत्रमात्रवृत्तित्वासम्भवे कारणं— औपदेशिकऋग्बाधायोगरूपमुक्तम् , तदपि स्तोत्रान्तरस्याश्रयत्वे ऋचां साम्न श्च बाधापत्तेरुभयबाधापेक्षया चैकस्यैवौपदेशिकस्यापि बाधौचित्यात् कुश काशावलम्बनमिति कथं रेवत्याधारस्य बारवन्तीयस्याश्रयालाभात् फलसम्ब न्धानुपपत्तिरिति चेत् ? सत्यम् , बारवन्तीयस्य फलसम्बन्धानुपपत्तौ नाश्र-यालाभः प्रयोजकः, अपि तु प्राप्तत्वेन ततो विध्युत्तरणमेव यागादिभ्य

इव, अतश्च परिशेषान्मूलानुक्तोऽपि रेवतीमात्रफलसम्बन्धपक्ष एव मुख्यपूर्व पक्षत्वेन सम्भावनीयः । तस्य चाश्रयालाभान्निराकरणं युक्तमेव । नहि तदा प्रकरणादाश्रयो लभ्यते, ऋगाधारस्यातिदेशिकेष्वेव युक्तत्वेनाग्निष्टोमस्तोत्र वृत्तित्वस्य वारवन्तीयमात्राधारत्वस्य वाऽप्राप्तत्वादनुवादानुपपत्तेः । वारवन्तीय वाक्यस्य त्वाश्रयसमर्पकत्वमस्मिन् पक्षे नाशंक्यमेव । नच प्रकारान्तरेणा श्रयालाभेऽपि वाक्येनैव तल्लाभोपपत्तिः, तेनापि ह्यग्निष्टोमस्तोत्रमात्रस्यैवाश्रयत्वं विधीयते, यागविशिष्टस्य वा? नोभयथापि सम्भवति । तथाहि— सर्वत्रैव तावद्दध्यादौ न वाक्येनाश्रयविधानं युक्तम् । तदा ह्याश्रयस्य प्रथमत एव तावन्न गुणं प्रति वैशिष्ट्यं सम्भवति, कारकत्वात्, अतः सोमादिवदेव भावनासम्बन्धोत्तरकालं पाष्ठिकं तदित्याश्रयणीयम् । नच गुणभावनायामाश्र- यस्यान्वयस्सम्भावयितुं शक्यः । स हि न तावत् करणत्वेन, तथात्वे भावा र्थाधिकरणन्यायप्रवृत्त्या तस्यैव फलसम्बन्धापत्तेः, करणत्वेनोपस्थितस्य गुण सम्बन्धायोग्यत्वाच्च । क्लृप्तप्रयोजनत्वात् गुणांगत्वापत्तेश्च नेतिकर्तव्यतात्वेन । अतः परिशेषात् कर्मत्वेनान्वयो वाच्यः । तत्रापि यदीप्सितकर्मत्वरूपेण गा- ध्यत्वेन, तत उद्देश्यानेकत्वाद्वाक्यभेदो गुणस्याश्रयांगत्वापत्तिश्च । यदि तु अनीप्सितकर्मत्वेनान्वयः, तदापि फलस्य कर्मत्वेनान्वयात् प्रत्ययस्य द्वि कर्मकत्वापत्तिः । न चेष्टापत्तिः, करोतिपर्यायत्वेन प्रतीत्यनुसारेण चैककर्म कत्वस्य सम्मार्गाधिकरणे स्थापितत्वात् । नच दध्यादावाश्रयस्य वाक्येना विधानेऽपि प्रकृते क्त्वाशब्दोक्तभावनायामन्वितस्याग्निष्टोमस्तोत्रस्य साम्नो वा गुणे वैशिष्ट्योपपत्तेः वाक्येन तद्विधानोपपत्तिः ? क्त्वाशब्दोक्तभावना हि क्रत्वर्थैव वा भावनान्तरं वा गुणफलभावना वा? नाद्यः, तस्या हि गुण फलभावनासम्बन्धाभावेन वैशिष्ट्यानुपपत्त्या सिद्धान्तिवदेकभावनाविशिष्टा परभावनाविधानानुपपत्तेः । न द्वितीयः, तस्याः प्रयोजनान्तराभावेन गुणभा- वनांगत्वापत्तौ तत्सम्बन्धिनस्स्तोत्रादेरपि तदङ्गत्वापत्त्या बहिः क्रत्वनुष्ठाना-

पत्तेः, यजेतेत्यनुवादानुपपत्तेश्च; तस्यापि तु विधाने भावनाया द्विकर्मकत्वापत्तिस्तदवस्थैव । तृतीयस्तु क्रियाद्वयाभावेन क्त्वाप्रत्ययानुपपत्तेरनाशङ्क्य एव । तस्मात् कथमप्याश्रयालभात् गुणफलसम्बन्धानुपपत्त्या पूर्वकर्मण्यनिविशमानात् रेवतीरूपात् गुणादेव कर्मान्तरम् । तत्र चापूर्वकर्मविधित्वाद्वाक्यभेदं विनैव यद्यपि सर्वमेव विधातुं शक्यम्, तथापि "न चेदन्येन शिष्टा" इति न्यायेन यदप्राप्तं तदेव विधीयते इतरत्तु प्राप्तमनूद्यत इति नातीव गौरवम् । नचैवमपि फलोद्देशेन यागविधिः-तत्र चातिदेशादेवाग्निष्टोमस्तोत्रस्य निकायित्वेन च पूर्वयागातिदेशाद्वारवन्तीयसाम्नोवा अप्राप्तत्वात् तदुद्देशेन रेवतीविधिरिति वैशिष्ट्यासम्भवाद्वाक्यभेदस्स्यादेवेति वाच्यम्, वैशिष्ट्यसम्पत्तये विशिष्टविधिसन्दष्टन्यायेनातिदेशप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा ऽग्निष्टोमस्तोत्रभावनोत्तरकालताविधेः वायव्यवाक्यन्यायेनाङ्गीकरणात् । अत एव तावतैव रेवतीविधिसिद्धेः न वारवन्तीयस्यापि उक्तरीत्या विध्यङ्गीकरणम् । नच विनिगमनाविरहः, अक्लृप्तकार्यकल्पनाभिया सामाङ्गत्वासम्भवेन स्तोत्राङ्गत्वस्यैव न्याय्यत्वात् । अत एवाग्निष्टोमसामेत्यपि विशेषणप्रधानतया स्तोत्रपरमेव, वारवन्तीयपदं तु निकायितया प्राप्तवारवन्तीयानुवादः । रेवतीनां च स्तोत्रं प्रत्यपि तदनुकूलपदशक्त्याधारत्वेन "आग्नेयीषु स्तुवत" इति वदधिकरणत्वोपपत्तेः सप्तमी यथाश्रुतैव, करणत्वलक्षणार्था वा । अतश्च रेवतीगात्रविशिष्टस्तोत्रभावना उत्तरकालादिसम्बन्धेन यागभावनाविशेषणमिति तद्विशिष्टो यागः फलोद्देशेन विधीयत इति सिद्धम् । नच भावनाया अकारकत्वात् कथं भावनान्तरविशेषणत्वम्, क्त्वाप्रत्ययादिस्थले उत्तरकालतादिसम्बन्धेनापि विशेषणत्वव्युत्पत्तेः । अत एव पूर्वभावनाया मुख्यविशेष्यत्वाभावेपि रेवत्यादिकारकाणां तत्रैवान्वय इत्युक्तं भावनानिरूपणे । अतएव पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन मुख्यविशेष्य

भूतभावनाविशेषणविशेषणभूतासु रेवतीषु विशेषणविधिकल्पनायोगात् तात्पर्यविवक्षेत्यप्यनाशङ्क्यम्, मुख्यविशेष्यभूतभावनाविशेषणत्वाभावेपि कृत्वा शब्दोक्तभावनाविशेषणत्वस्य सत्त्वेन पश्वेकत्वाधिकरणपूर्वपक्षन्यायाविषयत्वात्। अपिच यत्र लिङ्गसंख्यादौ कारकान्वयद्वारा भावनान्वयो व्युत्पत्तिसिद्धः तत्र तेषां तदनादरेण द्रव्यान्वये विशेषणविशेषणत्वान्न विधिकल्पनेति तद्विषयोऽसौ न्यायः। ननु यत्रापि कारकातिरिक्त सम्बन्धेन समासादौ द्रव्यान्वयद्वारापि भावनान्वयव्युत्पत्तिः, यथा—"लोहितोष्णीषा ऋत्विज" इत्यादौ, तत्र विशेषणविशेषणेपि विशेषणविधि कल्पनायां न किञ्चित् बाधकमस्ति। अत एव तादृशस्थले प्राप्तकर्मानुवादेनापि परस्परवैशिष्ट्यस्य पूर्वमेव प्रमितत्वादनेकविधानेपि न वाक्य भेदः। चित्रयेत्यादौ च लिङ्गस्य प्रातिपदिकार्थे अन्वयोऽव्युत्पन्न इति वैशिष्ट्यस्य पूर्वमप्राप्तत्वात् प्राप्तकर्मानुवादेनानेकविधाने युक्तो वाक्यभेदः। प्रकृते तु रेवतीनां भावनान्वयस्यापि सत्त्वात् भावनायाश्चोत्तरकालतादि सम्बन्धेन मुख्यभावनाविशेषणत्वोपपत्तेः युक्तं विशिष्टविधानम्। तस्मात् कर्मान्तरविधिरेवायम्।

नन्वेवमपि न कर्मान्तरत्वे प्रमाणमस्ति, "यदि ब्राह्मणो यजेते" त्यादाववेष्टेरिवाग्निष्टुत एव प्रयोगान्तरोपपत्तेः; न ह्युभयत्रापि वाजिन न्यायेन कर्मान्तरत्वाशङ्का सम्भवति, वाजिनस्य ह्युत्पत्त्यन्वयिनस्तं द्विधिभेदापादकस्य युक्तं कर्मान्तरत्वापादकत्वम्, कर्तृकालादिरूपस्य गुणस्य तु प्रयोगविध्यन्वयित्वेन उत्पत्त्यनन्वयान्नोत्पत्तिविधिभेदनिबन्धन कर्मभेदापादकत्वम्; अत एव कालोऽपि यः प्रयोजनविशेषार्थमुत्पत्तावे वान्वेति, यथाग्नेयादौ, तत्रेष्ट एव तेनाप्याग्नेयकर्मभेदः; "यदि ब्राह्मणो यजेते" त्यादौ तु ब्राह्मणादेः कर्तुः प्रयोगान्वयित्वात् तद्भेद कत्वमेवाङ्गीकरिष्यत इति तन्नयेन प्रकृतेप्युत्तरकालतादिरूपस्य गुणस्य प्रयोगभेदकत्वस्यैव युक्तत्वान्न कर्मभेदकता युक्तेति चेन्न;— क्त्वाप्रत्ययोपात्तस्य गुणस्यातिदेशत एव सम्भवत्प्राप्तिकतया स्वरूपेण विशे

षणविध्यविषयस्यात्र भेदकत्वाभावात् । सर्वत्र हि संख्यावत् गुणोऽपि विधेय एव भेदकः, न त्वविधेयः । यावज्जीवमित्यादावपि च निमित्तस्य स्वरूपेण विधेयस्यापि नैमित्तिकसम्बन्धित्वेनाप्राप्ततया विधेयत्वात् विनियोगभेदकत्वाविघातः । अतएव "यदि ब्राह्मणो यजेते" त्यादौ ब्राह्मणादिकर्तृकत्वस्याप्राप्तत्वाद्युक्ता भेदकता । प्रकृते तु क्त्वाप्रत्ययोपात्ततया ग्निष्टोमस्तोत्रोत्तरकालतादेस्स्वरूपेण कर्मसम्बन्धित्वेन चातिदेशादेव प्राप्तत्वात् नैवास्ति भेदकत्वम्, अपि तु रेवतीरूपस्य गुणस्यैव । तस्य चोत्पत्त्यन्वयित्वात् कर्मभेदकत्वमेव न प्रयोगभेदकत्वम् । नचैवं रेवतीरूपस्य गुणस्याग्निष्टोमस्तोत्र एवान्वयात् तद्भेदकत्वमेव स्यात् न कर्मभेदकत्वमिति वाच्यम्, तथात्वे फलोद्देशेन यागप्रयोगान्तरस्याप्यवश्यविधेयत्वापत्तेः लाघवेन कर्ममात्रभेदकत्वस्यैवाङ्गीकारात् । अत एव विवक्षितगत्या परम्परासम्बन्धेन रेवतीविशिष्टयागविधिरेवायम् । शाब्दबोधेऽन्वयनिर्वाहार्थं तु सम्भवत्प्राप्तिकस्याप्यग्निष्टोमस्तोत्रादेर्विशिष्टविधिसन्दष्टन्यायादिना विधेयत्वाङ्गीकरणम्, न वस्तुतः । अतश्च विवक्षितगत्या रेवतीरूपस्य गुणस्य यागान्वयितयैव विधेयत्वाद्युक्ता तत्स्वरूपभेदकता । अतः सिद्धं कर्मान्तरमेवात्र फलोद्देशेन विधीयत इति ।

नचैवमपि षष्ठ्यन्तैतच्छब्देन पूर्वकर्माङ्गतयाप्येतद्विधिप्रतीतेः कथं फलोद्देशेन कर्मान्तरविधानमिति वाच्यम्, तस्योद्देश्यानेकत्वकृतवाक्यभेदभिया निकायितया प्राप्तपूर्वयागप्रकृतित्वरूपसम्बन्धानुवादकत्वात् वाक्येन च फलोद्देशेन विधानात् । प्रकरणात् पूर्वयागाङ्गत्वं त्वनाशङ्क्यमेव । तस्मात् फलार्थं कर्मान्तरमेव विधीयते । तृतीयान्तैतच्छब्दस्तु "अथैष ज्योति" रितिवत् प्रस्तोष्यमाणकर्मवचन इति न विरोधः । प्रयोजनं स्पष्टम् । सूत्रन्त्वाश्रयतया परस्परानन्वयात् समेष्वेषु वाक्येषु कर्मयुक्तमेव फलं स्यादिति व्याख्येयम् ।

इति रेवत्यधिकरणम् ॥ १२ ॥

## अथ सौभराधिकरणम् ।

**सौभरे पुरुषश्रुतेः निधने कामसंयोगः ॥२-२-२७॥**

ज्योतिष्टोमे सौभरं साम त्रेधा समाम्नातं नित्यं नैमित्तिकं काम्यं च । तत्र षोडशिसंस्थावान्तरप्रकरणे "सौभरमुक्थ्यानां ब्रह्म साम भवती" त्यनेन नित्यतया विहितम् । अत्र हि ब्रह्मसामाख्यस्तोत्रोद्देशेन समाम्नायावगतं सौभरं विधीयते, प्रकरणाच्च षोडशिसंस्थापूर्वसाधनीभूतता स्तोत्रे लभ्यते, तस्य च स्तोत्रस्य वस्तुत उक्थ्याख्यस्तोत्रत्रयमध्यस्थत्वात् 'उक्थ्याना' मित्यनुवादः । नैमित्तिकतया तु अतिरात्रसंस्थावान्तरप्रकरणे "यदिबृहत्सामातिरात्र स्यात् सौभरमुक्थ्यानां ब्रह्मसाम कार्यमि" त्यनेन विहितम् । अत्राप्यतिरात्रसंस्थायामातिदेशप्राप्ते बृहत्सामत्वे निमित्ते तदपूर्वसाधनीभूतब्रह्माख्यस्तोत्रोद्देशेनैव सौभरं विधीयते । तत्रैवातिदेशप्राप्ते रथन्तरसामकत्वे निमित्ते तु "यदि रथन्तरं सौभरमुक्थ्येषु कुर्यादि" त्यनेनातिरात्रसंस्थापूर्वसाधनीभूतोक्थ्यस्तोत्रोद्देशेन सौभरं विधीयते । पुनश्च नित्यविधिसन्निधौ "यो वृष्टिकामो यो ऽन्नाद्यकामो यस्स्वर्गकामः स सौभरेण स्तुवीते" त्यनेन फलत्रयार्थं सौभरं विधीयते । अत्र चोद्देश्यानेकत्वात् "सौभरेण स्तुवीते" त्यस्यानुषङ्गाङ्गीकारेण वाक्यत्रयं द्रष्टव्यम् । सौभरस्य च षड्जादिस्वरसमाहारात्मकस्य ध्वन्यात्मकशब्दत्वेन सिद्धरूपस्य दध्यादिवदेवाश्रयापेक्षायां षोडशिसंस्थाङ्गभूतब्रह्माख्यस्तोत्रमेव प्रकरणात्प्रणयणादिवदाश्रयत्वेन सम्बध्यते ।

यत्तूक्तं पार्थसारथिना भवदेवेन च सौभरस्य गीतिरूपक्रियावाचित्वादाश्रयापेक्षाभावेन 'स्तुवीते' त्यनुवादानुपपत्तिमाशङ्क्य, अनुवादान्यथानुपपत्त्यैव तृतीयान्तेन सौभरपदेन करणत्वविशिष्टस्यैव सौभरस्य करणतासम्बन्धेन फलोद्देशेन विधानादाद्यकरणत्वस्य निरूपकापेक्षायां प्रकरणात्पूर्वस्तोत्रविशेषसम्बन्धोपपत्तिरित्युपपादनम् ; तत् गीतेरपि षड्जादिस्वरसमाहारात्मकत्वस्य पूर्वाधिकरणे साधितत्वादुपेक्षितम् ।

नच सौभरस्यापि क्रत्वर्थत्वेन प्राप्तत्वादुभयप्राप्तौ ऐन्द्रवायवाग्रानितिवद्धात्वर्थस्य स्तोत्रस्यैव फलोद्देशेन विधिरस्त्विति वाच्यम्, तथासति स्तोत्रस्यैव बहिःक्रतुप्रयोगापत्तौ तत्र सौभरस्याप्राप्तत्वात्, तत्रापि विधाने विशिष्टविधेर्गौरवापत्तेः, सौभरस्य फलसम्बन्धाङ्गीकारात्। अतस्सिद्धं सौभरस्य काम्यत्वमपि। तस्यच समानकाले शाखाभेदेन निधनाख्यान्तिमसामावयवाधारत्वेन 'हीष् ऊर्क् ऊ' इत्यादीनि स्तोभाक्षराणि समाम्नातानि, तदेवंविधं सौभरं प्रकृत्य श्रूयते,"हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय,ऊ इति स्वर्गकामाये" ति। तत्र किं हीषादिस्तोभाक्षराणि प्रकृतसौभराश्रितानि वृष्ट्याद्यर्थत्वेन विधीयन्ते, उत वृष्ट्याद्यर्थे सौभर एवानियमेन प्राप्तानि नियम्यन्त इति विचारः। वाक्यभेदापादकगुणप्रमाणकभावनाभेदविचारात् पादाध्यायसङ्गती स्पष्टे। इन्द्रियकामाधिकरणरेवत्याधिकरणयोर्द्वयोरप्यपवादात्त्वनन्तरता।

तत्र वृष्टिकामपदस्य तावत् स्वर्गकामाधिकरणन्यायेन फलपरत्वात् तादर्थ्यचतुर्थ्या तदर्थत्वेन हीषादिकं दध्यादिवत् गुणसंक्रान्तशक्तिकेन विधिना विधीयते। अत एव निधनपदमाश्रयतया प्राप्तनिधनसम्बन्धानुवादः। तथाहि- हीषाद्यक्षराणि तावत्सिद्धरूपाणि सामभागपरिपूरकत्वेन योग्यत्वात् प्रकृतसौभराख्यं सामैवाश्रयत्वेनावलम्बन्ते, युक्तं हि तस्य स्वावयवद्वारा स्तोभाक्षराधारकत्वात् दृष्टविधया हीषादिसम्बन्धित्वम्। अतश्च यथैव स्तोत्रादेः स्वसाधनीभूतऋगक्षराभिव्यक्त्यर्थकसौभरादिसाध्यत्वात् परम्परासम्बन्धेप्याश्रयत्वाविघातः, तथा साम्नोऽपि स्वावयवद्वारा स्तोभाक्षरसाध्यत्वादाश्रयत्वोपपत्तिः। न ह्यत्र वारवन्तीयादिवददृष्टद्वारतया प्रविष्टम्, येनाश्रयत्वं विहन्येत। नचैवमपि भवन्मते साम्नः सिद्धरूपत्वेनाश्रयत्वानुपपत्तिः, सिद्धरूपस्यापि उच्चारणक्रियाविशिष्टत्वेन कृतिसाध्यत्वात् रूपादिवदाश्रयत्वोपपत्तेः। ध्वन्यात्मकशब्दस्य नित्यत्वा

नङ्गीकाराच्च । नचैवमपि सौभरस्यानेकभागत्वान्निधनस्यैवाश्रयत्वे प्रमाणा भावः, निधनाधारतया हीषादिपाठस्यैव लाघवेनाश्रयतानियामकत्वात्, अन्यथा क्रत्वर्थनिधनाङ्गतया हीषादिविधौ गौरवापत्तेः । अस्तु वा तस्य तत्, तथापि भागान्तरे हीषादिनिवेशे स्तोभान्तरबाधापत्तेः क्वचिच्च प्रधानभूत ऋगक्षरान्तरस्यैव बाधापत्तेरबाधपक्षपातिना शास्त्रेण क्रतुसाद्गुण्यार्थं निधना धारतयावश्यप्रयोज्यस्य हीषादेस्तन्मात्राश्रयत्वलाभो नानुपपन्नः । अतश्च निधनानुवादोपपत्तेरेवत्याधिकरणन्यायेन हीषादिविशिष्टनिधनान्तरविध्याशङ्कानुपपत्तेर्दध्यादिवद्गुणसंक्रान्तशक्तिना विधिना इन्द्रियकामाधिकरणन्यायेन हीषादिकमेव तत्तत्फलोद्देशेन विधीयते । नच रेवत्यधिकरणन्यायापेक्षया लघुभूतेन्द्रियकामाधिकरणन्यायेन गुणफलसम्बन्धविध्युपपत्तावपि गुण फलसम्बन्धे अपूर्वविध्यापत्तेस्ततोप्यातिलघुभूतनियमविध्यापादकं तत्तत्फलक सौभरसम्बन्धिनिधनाधारतया हीषादिविधिरिति पक्षान्तरमेव किमिति ना श्रीयत इति वाच्यम्, उक्तविधोद्देश्यप्रत्यायकाभावेन तादृशवचनव्यक्ति पक्षस्यानुक्तिसहत्वात् । तथाहि—निधनपदं वोद्देश्यसमर्पकम्, वृष्टिकामादिपदं वा? नाद्यः, निधनमात्रोद्देशेन विधानस्य तावत्पाठान्प्राप्तिसम्भवेनानुपपत्तेः । वृष्टिकामपदेन वृष्टिसाधनसौभरीयत्वविशेषणे तु विशिष्टोद्देशेन वाक्य भेदः । सौभरीयत्वस्य वृष्टिकामपदशक्त्याऽलाभात् लक्षणापत्तिश्च । अत एव न द्वितीयः। नचैकं पदं वृष्टिसाधनसौभरसम्बन्धिनिधनलक्षकम्- अन्यच्च तात्पर्यकग्राहकमिति शक्यते वक्तुम्, विनिगमनाविरहात् । तात्पर्यग्राहक स्यापि शाब्दबोधसामग्र्यन्तर्गतत्वेन वाक्यभेदानिवारणाच्च । अन्यथा हवि रुभयत्वविवक्षाया दुर्निवारत्वात् । किञ्च वृष्ट्यादिसाधनसौभरवृत्तिनिधनो द्देशेनापि हीषादेः पाठत एव प्राप्तत्वान्न विधिसम्भवः । यदि तु वृष्टिसाधनी भूतसौभरनिधन इव तदसाधनसौभरनिधनेपि कदाचिद्धीषः प्राप्तिसम्भवात् तत्र तद्व्यावृत्तिफलकनियमस्यैव फलत्वोपपत्तेः विधिसम्भव इत्युच्येत, ततो

एव हीष् इत्येवंविधः, शेषाणां विधेयशेषगतानियमफलसम्भवे उद्देश्यगतस्य तस्यान्याय्यत्वात् । नह्ययं प्राप्तनियमः, येन हीषोऽविधेयत्वमाशंक्येत, प्रत्यक्षस्यापि पाठस्य विधिकल्पनया सामान्यमुखेन च वृष्टिकामप्रयोग मुपारूढस्य मन्थरप्रवृत्तिकतया ततः पूर्वप्रवृत्त्यङ्गीकारेणात्र हीष एव विधेयत्वात् । अतश्च तद्गतस्यैव नियमस्य फलत्वोपपत्तिः । एवंच शेषि नियमाकरणान्नित्यनैमित्तिकसौभरप्रयोगे हीषाद्यप्राप्तिः । नचैवमपि प्रबलेन वाक्येन चतुर्थीश्रुत्या वा वृष्ट्यर्थसौभरप्रयोगविशेषाङ्गतया हीषादिविधौ लिङ्गादिवदेव दुर्बलस्य श्रुत्यकल्पकत्वात् कथं नित्यनैमित्तकप्रयोगे हीषादि प्राप्तिः? दुर्बलस्यापि पाठस्यात्यन्तवैयर्थ्यप्रसङ्गेन चमसानां भक्षे सामाख्या या इव पौर्णमासीस्थवेदिकरणादौ प्रकरणे पाठादेव च नित्यनैमित्तिकप्रयोग विषये हीषादिविधिकल्पकत्वस्याङ्गीकारात् । लिङ्गादेर्गार्हपत्यादौ लक्ष्ये शक्यसम्बन्धार्थमेवोपपत्तेः चेन्द्रादिविषये तस्य श्रुतिकल्पकत्वम् । नचैवं पाठस्यापि वृष्ट्याद्यर्थसौभरप्रयोग एव निधनाख्यद्वारसम्बन्धेन कृतार्थत्वान्न नित्यनैमित्तिकयोगेन श्रुतिकल्पकत्वापत्तिः? नहि विधिवाक्ये वृष्ट्यर्थसौभर सम्बन्धिनिधनस्यैवोद्देश्यता सम्भवति, येन पाठं विनैव निधनसम्बन्धो लभ्येत, वृष्टिकामपदेन तु वृष्टिसम्बन्धिप्रकृतसौभरमात्रलक्षणेपि निधन लक्षणायामेव प्रमाणाभावात् न तदन्तस्योद्देश्यत्वम् , अतः पाठस्यैव निधनसम्बन्धप्रयोजकत्वात् नैमित्तिकप्रयोगे हीषाद्यप्राप्तिः तदवस्थैवेति चेन्न;— वृष्टिसम्बन्धिसौभरमात्रस्यैवोद्देश्यत्वेपि हीष्विधेर्लब्धभूतनियमफल कत्वलाभाय निधनस्थानकत्वलाभोपपत्तेः । एतद्विध्यभावे हि पाठेन निधन एवानियमेन हीषादिः प्राप्यते, ततश्च विधिफलसामर्थ्यादेवात्र निधनस्थान कत्वलाभः । अत एव पाठेन सामान्यतो यत्किंचित्प्रयोगवृत्तिसौभरीयनि- धनसम्बन्धितयैव कल्पितापि श्रुतिः विशेषविधिना बाधादाहवनीयादिविषयैव कल्प्यत इति युक्तं तस्य नित्यनैमित्तिकप्रयोगमात्रविषयत्वम् । हीषादेश्च विधिफलसामर्थ्यात् निधनस्थानकत्वम् । नियमफलकत्वादेव च वृष्टिपदेन